Sri Vani Vilas Sanskrit Series

No. 18.

# SIVA LILARNAVA

BY

SRI NILAKANTHA DIKSHITA.






SRIRANGAM:
SRI VANI VILAS PRESS.
1911.

॥ श्रीः ॥

# ॥ शिवलीलार्णवः ॥

श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्य
चतुरधिकशतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजि
श्रीमदप्पयदीक्षितपौत्रेण नीलकण्ठविजय-
चम्प्वाद्यनेकप्रबन्धप्रणेत्रा महाकवि
श्रीनीलकण्ठदीक्षितेन
विरचितः ।



श्रीरङ्गम्
श्रीवाणीविलासमुद्रायन्त्रालयः ।
१९११.

# PREFACE.

SIVALILARNAVA is the name of a Mahakavya in twenty two cantoes by Sri Nilakantha Dikshita. It treats of the famous sixty four lilas or plays of God Siva otherwise known as Sundaranatha at Madura, the great South Indian Shrine. Tradition has it that God Siva incarnated himself as Sundara Pandya the marvellous king of the Pandyan Dynasty at Madura and for the sake of his several Bhaktas performed sixty four miraculous feats which are all duly narrated in this Kavya in beautiful mellifluous poetry. At Madura we can even now observe these sixty four feats being performed as festivals in the Temple. These feats are found recorded in the Halasya Mahatmya—the 45th khanda of the Skanda Purana which is the source for this poem also. The author of this Kavya, Nilakantha Dikshita otherwise known as Ayya Dikshita, who flourished in the first half of the seventeenth century was the grandson of the brother of the renowned Appaya Dikshita and was the Prime Minister and Court Pandit of Tirumala Nayak, the most powerful and the best known of the

Nayak dynasty who ruled over the Pandyan kingdom at Madura for thirty-six eventful years. He was a great poet and has written several works among which this Kavya holds the foremost rank. The diction is sweet and the flow quite natural. None of his contemporaries could equal him in the ease of his style or in the depth of his learning. He neither labours himself nor does he belabour the brains of others. His is a natural uninterrupted flow of choice expressions pregnant with meanings and wonderful similes. His minor works are six viz., Kalividambana, Sabharanjana, Anyapadesasataka, Santivilasa, Vairagyasataka and Anandasagarastava. Of his major works, besides this Kavya we have Gangavatarana, Nalacharita Nataka, Kyyatavyakhyana and Sivatattvarahasya. Fuller particulars regarding this Poet and his contemporaries can be gleaned from the learned Sanskrit Introduction for which my grateful thanks are due to Mr. T. S. KUPPUSWAMY SASTRIGAL of the Govt. Training School, Tanjore, who it was that first gave me a beautifully written manuscript of this Poem. Later on I obtained a splendid palm leaf copy of the same from His Holiness Sri Jagadguru of Sringeri who graciously ordered me to print this work in the Sri Vani Vilas Sanskrit Series. With the help of these manuscripts and a third obtained through a friend, this edition was prepared and I now issue it to the Public with

the full confidence that they would accord it an honorable place in the front rank of similar Sankrit Poems. To enhance the beauty of the book I have added several half-tone and coloured illustrations in their proper places and trust they would be duly appreciated.

*T. K. Balasubrahmanyam*

॥ श्रीः ॥

# ॥ श्रीनीलकण्ठदीक्षितः ॥

## तत्समकालिका द्रविडदेशीया अन्ये कवयश्च ॥



जानन्ति खलु सर्वेऽपि पण्डिता दक्षिणदेशेषु श्रीमति भरद्वाजान्वये कृतावतारा: श्रीमदप्पय्यदीक्षितेन्द्रा इति । तेषामेव दीक्षितमणीनाम् 'अप्पयदीक्षिता:', 'अप्पदीक्षिता:' इत्यपि नामान्तरद्वयं संदृश्यते ग्रन्थेषु । श्रीकण्ठमत-प्रतिष्ठापनाचार्य-चतुरधिकशतप्रबन्धनिर्वाहक-महाव्रतयाजिन इति तेषां बिरुदावलि: । ते हि गतेषु ४६५४ कल्यब्देषु तथातीतेषु १५५४ क्रिस्ताब्देषु, काञ्चीपुरपरिसरवर्तिनि अडयप्पलनाम्न्यग्रहारे भरद्वाजकुलोत्पन्नस्य च्छन्दोगस्य श्रीमदाचार्यदीक्षितस्य सूनो: श्रीविश्वजिद्याजिरङ्गराजमखिनो लब्धजन्मानो द्वासप्ततिं संवत्सरान्प्राण्य पर:शतान्ग्रन्थान्निर्ममु: । सर्वतन्त्रस्वतन्त्रा: श्रीमन्तो दीक्षितेन्द्रा: । तत्रापि तेषामनितरसाधारणी नैपुणी पूर्वोत्तरयोर्मीमांसयो: । भक्तिश्च

भगवति चन्द्रचूडे । द्राविडी (Tamil) तेषां जन्मभाषा । तेषां जन्मवत्सरादिकं सर्वमपि वृत्तान्तं विशदं व्याहरति दीक्षितचरितप्रस्तावे आत्मार्पणस्तवव्याख्याने श्रीकालहस्तिशरणशिवानन्दयोगीन्द्रः—

'वीणातत्त्वज्ञसंख्यालसितकलिसमाभाक्प्रमातीचवर्षे
कन्यामासे तु कृष्णप्रथमतिथियुतेऽप्युत्तरप्रोष्ठपाद्भे ।
कन्यालग्नेऽद्रिकन्यापतिरमितदयाशेवधिर्वैदिकेषु
श्रीगौर्यैं प्राग्यथाह स्म समजनि विरिञ्चीशपुर्यां कलेशः ॥'
इति ।

तेषां समजनिषत बहवः पुत्राः । सर्वेऽपि कृतविद्या विनयोज्ज्वलाश्चावर्तिषत समीप एव तेषां निर्याणसमये । निर्याणं च श्रीमति चिदम्बरक्षेत्रे समभूत् । इयं हि तेषां चरमा सूक्तिरिति श्लोकममुं पठन्ति विद्वांसः—

'चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं
सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित्कृताः ।
वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा
न किंचिदहमर्थये शिवपदं दिदृक्षे परम् ॥' इति ।

उच्यते च शिवलीलार्णवमहाकाव्येऽस्मिन्नीलकण्ठमखीन्द्रेण—

'कालेन शंभुः किल तावतापि
कलाश्चतुःषष्टिमिताः प्रणिन्ये ।
द्वासप्ततिं प्राप्य समाः प्रबन्धा-
ञ्शतं व्यधादप्पयदीक्षितेन्द्रः ॥' इति ।

तैः कृताः कृतयश्चतुरधिकं शतमिति परिगण्यन्ते विद्वैः। त इमे दीक्षितेन्द्रा वेलूर् (Velur) आख्यनगराधीश्वरेण चिन्नवीरप्पनायकपुत्रेण लिङ्गमनायकस्य पित्रा [1]चिन्नबोम्म भूपालेन सादरं नितरां संभाविताः संमाननाभिः । वसन्तस्तस्य समीप एव तत्र नगरे बहुशोऽत्यवाहयन्स्वजीवितकालम् । उच्यते च ग्रन्थेषु—

'कर्णः श्रीचिन्नबोम्मक्षितिपतिरभितो लम्भयञ्शातकुम्भ-
स्तोमं हेमाभिषेकप्रणयनसमये यस्य मूर्तिं प्रशस्याम् ।

---

1. असौ चिन्नबोम्मभूपालो विजयनगराधीशस्य सदाशिवमहाराजस्य, पेन्नुगोण्डाधीशस्य कर्णाटराजस्य श्रीरङ्गमहारायस्य च, सामन्तोऽभूत् । चिन्नबोम्मभूपालस्यास्य प्रार्थनया सदाशिवमहाराजेन श्रीरङ्गमहारायेण च दत्तानि सप्त दानशासनपत्राणि वेलूर् (Velur) ज्वरखण्डेश्वरदेवायतने शिलायामुत्कीर्णानि दृश्यन्ते । तानि च १४८८ (A. D. 1566.) शकाब्दे, १४९७ (A. D. 1575.) शकाब्दे चोत्कीर्णानि । (Vide Pp. 69—75, Vol. I., South Indian Inscriptions, by Dr. E. Hultzsch.)

रेजे श्रीरङ्गराजाध्वरिवरकलशाम्भोधिलब्धप्रसूते-
विद्याकल्पद्रुमस्य स्वयमिव कलयञ्जातरूपालवालम् ॥'

इति समरपुंगवदीक्षितकृतयात्राप्रबन्धचम्पूकाव्ये ।

हेमाभिषेकसमये परितो निषण्ण-
सौवर्णसंहतिमिषाच्चिनबोम्मभूपः ।
अप्पय्यदीक्षितमणेरनवद्यविद्या-
कल्पद्रुमस्य कुरुते कनकालवालम् ॥'

'नानादेशनरेन्द्रमण्डलमहायत्नातिदूरीभव-
त्कादाचित्कपदारविन्दविनतेरप्पय्ययज्वप्रभोः ।
शैवोत्कर्षपरिष्कृतैरहरहः सूक्तैः सुधालालितैः
फुल्लत्कर्णपुटस्य बोम्मनृपतेः पुण्यानि गण्यानि किम् ॥'

इत्यन्यत्र च ।

अनन्तरं चाराधिता दीक्षितेन्द्राः पेन्नुगोण्डाधीशेन श्रीरङ्गरायसोदरेण तिरुमलरायतनूजेन [1]वेङ्कटदेवेन । नियोगेन चास्याकुर्वन्कुवलयानन्दं नामार्थालंकारप्रबन्धम्—

1. वेङ्कटदेवराज्यसमयश्च १५०८ (A. D. 1586) शकाब्दादारभ्य १५३५ (A. D. 1613) शकाब्दावधीति निर्णीतम् । (Vide. P. XIII, Second 'Report on Sanskrit Manuscripts', by Dr. E. Hultzsch.)

'अमुं कुवलयानन्दमकरोदप्पदीक्षितः ।
नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः ॥'

इति कुवलयानन्दे ।

अनन्तरं च दीक्षितेन्द्रा अतीतेषु १५४८ शालिवाहनशकाब्देषु, यातेषु च १६२६ क्रिस्ताब्देषु, अक्षयनाम्नि संवत्सरे शैववैष्णवानां विवादं कमपि निर्णेतुं पाण्ड्यदेशाधिपतिना तिरुमलैनायकमहाराजेन बहु प्रार्थितास्तत्रागमन् । प्रतीयते चायमंशः '[1]ओरिएण्टल् हिस्टारिकल् म्यान्युस्क्रिप्ट्स्' आख्यग्रन्थतोऽपि । अथ स्वदेशमागत्य कियतापि कालेन कालधर्मं गता दीक्षिताः । अतः सर्वथा निर्णीयते १६२६ तमाब्दात्पूर्वं न तेषां निर्याणसमय इति । शाब्दिकसार्वभौमः श्रीमान्भट्टोजिदीक्षितोऽपि तानेव गुरून्प्रार्थयमानस्तेभ्य एवाध्यैष्ट श्रीमद्भाष्यं ब्रह्मसूत्राणां श्रीमच्छंकरभगवत्पादप्रणीतम् । एवं व्याहरन्ति दाक्षिणात्या ऐतिहासिकाः—'श्रीमान्भट्टोजिदीक्षितः स्वयं विरचितान्ग्रन्थान्बहूँल्लेखकैर्लेखयित्वा प्राहिणोद्बहुभ्यः पण्डितेभ्यः । ते च दृष्ट्वा तां सरणिमतिमञ्जुलां नूत्नां चापाठयंस्तामेव शि-

---

1. 'Oriental Historical Manuscripts' translated by W. Taylor, Vol. II., P. 149.

स्यान् । अथ बहुना कालेन स एव दक्षिणां दिशं प्रपेदे सह शिष्यैः । तदा किल ददर्श कचिन्निकटे चिदम्बरस्य वसतः श्रीमदप्पय्यदीक्षितेन्द्रान् । तत्र च सति प्रसङ्गे तानसौ अधिजग्मिवान् अखिलशास्त्रवेदनचणानधिगतवेदान्तरहस्यान् । तेषामेव मुखात्प्रयतः शुश्राव कौमारिलं तन्त्रम्, श्रीमच्छंकरभगवत्पादप्रणीतं ब्रह्मसूत्रभाष्यं च । ततः कुर्वन्गुरवे दक्षिणां ग्रन्थान्ते चोदितः स्वयं गुरुणा पूर्वोत्तरमीमांसयोः कर्तुमेकैकं ग्रन्थम् । प्राणैषीदसौ 'तन्त्रसिद्धान्तदीपिकाम्', 'श्रीमत्तत्त्वकौस्तुभम्' च । तन्त्रसिद्धान्तदीपिकायां श्रीमदप्पय्यदीक्षितेन्द्रानात्मनो गुरून्व्याहरति श्रीभट्टोजिदीक्षितः । यथा—

'अप्पय्यदीक्षितेन्द्रानशेषविद्यागुरूनहं वन्दे ।
यत्कृतिबोधाबोधौ विद्वदविद्वद्विभाजकोपाधी ॥' इति ।

तत्त्वकौस्तुभे च द्वितीयपरिच्छेदोपक्रमे 'प्रायशो विदुषां मुदे' इति चायमंशः सूचित इति । तथा ततः परं श्रीमति व्याकरणेऽपि ग्रन्थकरणं प्रार्थितैर्दीक्षितचरणैर्विरचिता श्रीमती नक्षत्रवादावली । यत्र च प्रतिद्वन्द्वितया 'अधुना पाणिनितन्त्रे विदुषां प्रीत्यै विरच्यन्ते' इति स्पष्टं तस्य ग्रन्थस्य विद्वत्प्रीतिहेतुत्वं विशिष्योक्तमिति च । औत्तराहास्तु

गङ्गायात्रार्थमुदीचीं गतैः श्रीमदप्पय्यदीक्षितैः सह समागमः श्रीभट्टोजिदीक्षितस्येत्यामनन्ति । सर्वथा श्रीमदप्पय्यदीक्षितानां न्यूनवयाः समकालिकश्च श्रीमान्भट्टोजिदीक्षित इति सिद्धम् । अयं भट्टोजिदीक्षितः केलदीवेङ्कटेन्द्रस्य निदेशात्तत्त्वकौस्तुभं प्राणैषीदिति तत एव तदुक्त्यैवावगम्यते । यथा—

'केलदीवेङ्कटेन्द्रस्य निदेशाद्विदुषां मुदे ।
ध्वान्तोच्छित्त्यै पटुतरस्तन्यते तत्त्वकौस्तुभः ॥'

इति ।

[1]अस्य च राज्ञः समयः १६०४ तमात्क्रिस्ताब्दादारभ्य १६२६ तमसंवत्सरावधिक आसीदिति निश्चीयते ।

श्रीमदप्पय्यदीक्षितस्य समानकालिकाः कवयः पण्डिताश्च—

(१) सुप्रसिद्धः श्रीमान्रत्नखेटदीक्षितः, (२) आलंकारिकचूडामणिर्महाकविर्जगन्नाथपण्डितः, (३) वैयाकरणसार्वभौमः श्रीमान्भट्टोजिदीक्षितः, (४) अद्वैतविद्याचार्यश्चोलभूवल्लभस्याच्युतनायकस्य तत्तनयस्य रघुनाथभूपालस्य च मन्त्री विश्वविश्रुतौदार्यो गोविन्ददीक्षितश्च ।

1. Vide. P. XII, Second 'Reports on Sanskrit Manuscripts', by Dr. E. Hultzsch.

रत्नखेटदीक्षितस्य श्रीनिवासदीक्षित इत्येव स्वपित्रा कृतं नाम । तस्य रत्नखेटश्रीनिवासदीक्षित इत्यपि व्यवहारः । तस्य संध्यावर्णनचातुर्या प्रमुदितेन राज्ञा कृतं नाम रत्नखेटाध्वरीति । उच्यते चैवं तस्य पुत्रेण राजचूडामणिदीक्षितेन प्रणीतस्य रुक्मिणीपरिणयमहाकाव्यस्य व्याख्यानारम्भे व्याख्यात्रा बालयज्ञवेदेश्वरेण——

‘ संध्यासंधुक्षिताम्भोधरनलिकगणादुद्गतान्सीसखण्डां-
स्ताराकारान्निरोद्धुं शशिरविकपटाद्बिभ्रतो रत्नखेटौ ।
अन्योन्यं युध्यमानावुदयचरमभूभृत्प्रवीराविति द्रा-
गुक्त्या ख्यातापराख्यः क्षितिपतिवचसा रत्नखेटाध्वरीति ॥

श्रीमतो रत्नखेटदीक्षितस्य कृतयः— (१) शितिकण्ठविजयकाव्यम्, (२) भावनापुरुषोत्तमनाटकम्, (३) अद्वैतास्रवकौस्तुभम्, (४) वादतारावली, (५) मध्वध्वंसनम्, (६) बौद्धतन्त्रमथनम्, (७) वेदान्तवादावली, (८) मणिदर्पणम्, (९) समयसर्वस्वम्, (१०) विधिनिर्णयम्, (११) रत्नदीपम् । अन्ये च सन्ति बहवस्तत्प्रणीताः प्रबन्धाः । उच्यन्ते च तत्कृतप्रबन्धानां नामानि पूर्वोक्तव्याख्याने । यथा——

'अद्वैतास्त्रवकौस्तुभं व्यरचयद्यो वादतारावलीं
मध्वध्वंसनबौद्धतन्त्रमथने वेदान्तवादालीम् ।
प्रख्यातं मणिदर्पणं समयसर्वस्वं विधेर्निर्णयं
तत्त्वानां परिशुद्धिबोधविमलं रत्नप्रदीपं स्मृतेः ॥

यो भावनापुरुषवर्यमुखान्यकार्षी-
दष्टादशापि च दशाद्भुतरूपकाणि ।
भावोत्तराणि शितिकण्ठजयादिमानि
काव्यानि षष्टिमतनोदमृतायितानि ॥

ध्वन्यध्वन्यमनोविनोदनिपुणाः साहित्यसंजीविनी-
भावोद्भेदरसास्त्रवादिकृतयः पारेशतं यत्कृताः ।
अन्ये क्षौद्ररसार्द्रसुन्दरगिरः क्षुद्रप्रबन्धाः शतं
छन्दोज्यौतिषमन्त्रतन्त्रविषया भाषाप्रबन्धास्तथा ॥

अन्याश्च यस्य कृतयो निखिलागमान्त-
सिद्धान्तितान्तरनिरन्तरसूक्तिगुम्भाः ।
षड्दर्शनीसकलमर्मविवेककर्म-
कर्मक्षमाः सुकृतिनां मुदमावहन्ति ॥'

रत्नखेटदीक्षितस्य परम्परा यथा—

श्रीभवस्वामी (भाष्यकारः)
|
श्रीकृष्णार्यः (आह्निकप्रणेता)
|
कुमारभवस्वामी (अद्वैतचिन्तामणिकारः)
|
श्रीकृष्णार्यः
|
श्रीभवस्वामिभट्टः
|
श्रीरत्नखेटश्रीनिवासाध्वरी

तथा चोच्यते रुक्मिणीपरिणयकाव्यस्य व्याख्यानारम्भे—

‘यः षष्ठो भाष्यकर्तुः क्रतुवरमहितश्रीभवस्वामियष्टुः
श्रीकृष्णार्यस्य दैनंदिनकृतिकृतिनः सोमपः पञ्चमो यः।
नप्ता योऽद्वैतचिन्तामणिविरचयितुः पौण्डरीकादियष्टुः
सर्वज्ञातुः कुमाराह्वयमिलितभवस्वामियज्वाभिधस्य ॥
श्रीकृष्णार्यस्य पौत्रः प्रतिदिवसमविश्रान्तमन्नप्रदातु-
र्ज्योतिष्टोमादियष्टुर्विविधकृतिकृतः सर्वविद्याधिकस्य ।
यः श्रीवैकुण्ठघण्टामणिरिति महितश्रीभवस्वामिभट्ट-
स्याद्वैतज्ञानधूताखिलकलुषगणस्यात्मजः स्वात्मवेत्तुः ॥’

यदुच्यते श्रीमदप्पय्यदीक्षितकृत ‘सिद्धान्तलेशसंग्रह’

ग्रन्थस्य भूमिकायां दीक्षितवृत्तान्तलेखनप्रवृत्तैर्भट्टश्रीनारायणशास्त्रिभिः 'अस्य (अप्पय्यदीक्षितस्य) समकालिकाः कवयः पण्डिताश्च विलिख्यन्ते' इत्यारभ्य 'आनन्दरायमखी विद्यापरिणयजीवानन्दादिप्रणेतास्य मान्यतमो वृद्धः' इति, तत्प्रमादकृतम्। अयमानन्दरायमखी भोसलवंशभूपतिकुलामात्यस्य बाबाजिनाम्नो नप्ता, तञ्जनगराधीशस्यैकोजिमहाराजस्य मन्त्रिणो गङ्गाधराध्वरिणः पौत्रः, तस्यैव राज्ञो मन्त्रिणस्त्रिपुरविजयचम्पूप्रबन्धस्य निर्मातुर्नृसिंहरायमखिनस्तनूजः, स्त्रीधर्मादिग्रन्थकृतस्त्र्यम्बकरायमखिनस्तत्समनन्तरभ्रातुर्मुकुन्दविलासकाव्य-राघवाभ्युदयनाटकादीनां प्रणेतुर्भगवन्तरायस्य च भ्रातृव्यः, सहजि-शरभोजि-तुक्कोजिमहीपालानां मन्त्री च स्वयं विद्यापरिणयजीवानन्दादिनाटकप्रणेता, आश्वलायनगृह्यसूत्रव्याख्याता च। तेषां राज्ञां राज्यारम्भकालोऽधस्तात्संदर्श्यते—

| | | |
|---|---|---|
| एकोजिराजस्य | १६७६ | तमः क्रिस्ताब्दः। |
| शहजिराजस्य | १६८४ | ,, |
| शरभोजिराजस्य | १७११ | ,, |
| तुक्कोजिराजस्य | १७२९ | ,, |

तुक्कोजिमहाराजः १७३६ वत्सरावधि सप्त संवत्सरा-

न्राज्यमकरोत्। असावानन्दरायमखी स्वपितृव्यकृतमखानुष्ठानसमये धातुवर्षे (१६९८ तमे क्रिस्ताब्दे) अनतीतकौमारोऽभूत्—

'धातुवर्षे यदा यज्ञसेवार्थमहमागतः।
श्रीमहाराजराजस्य मन्त्रिणस्त्र्यम्बकप्रभोः॥

महाराजस्तु मां प्रीत्या स्वसभायामवासयत्।
भारतश्रवणार्थाय रात्रिंदिवमुदारधीः॥

यदा मासत्रयादूर्ध्वं प्राप्यानुज्ञां महीपतेः।
गन्तुमिच्छामि च तदा धर्मशास्त्रनिबन्धने॥

महाराजेन चाज्ञातो गौरीमायूरमागतः।
तस्मिन्वर्षे वृश्चिकार्के धर्मशास्त्रसुधानिधेः॥

एकेनैव मया पुत्रयुक्तेन शनकैः कृते।
बुद्धिदण्डेन मथने रात्रिंदिवमनेकधा॥

अष्टभिर्लब्धवानस्मि वत्सरैस्तत्फलं महत्।
आचारनवनीतं तन्मृदु सर्वमनोहरम्॥

महाराजस्य दयया तत्संग्राह्यमभूद्भुवि।
समाप्तं पञ्चदशभिः सहस्रैर्ग्रन्थसंख्यया॥

प्रचारोऽस्य महाराजाधीन एव हि सर्वथा ।
अहमप्पाध्वरी नाम्ना महाराजेन सादरम् ॥
दत्तां महीं समादाय............दिसंभृतैः ।
धान्यैः परम्परासिद्धे ग्रामे कृष्या समार्जितैः ॥
कुर्वन्कुटुम्बभरणं पुत्रपौत्रैः समावृतः ।
श्रेयः प्रार्थयमानः सन्महाराजस्य संततम् ॥
आयुःशेषं सुखं वस्तुमिच्छाम्यग्निक्रियान्तिके ।
मनोरथो महानेव महाराजेन पूर्यताम् ॥
एकक्ष्मापतिपूर्वपुण्यसुकृतोत्कर्षेण लब्धोदयो
दीपाम्बोदरवामभाग्यमहिमप्रख्यातपुण्योच्चयः ।
श्रीशाहक्षितिराट् प्रशास्तु वसुधामाचन्द्रमप्पाध्वरी
यद्दत्तान्नबलेन धर्मविषयं शास्त्रं समग्रन्थयत् ॥'

इत्यप्पादीक्षितविरचिते आचारनवनीते ।

'सूत्रधारः—— अद्य भारद्वाजकुलजलधिकौस्तुभेन त्र्यम्बकरायमखिना समारब्धस्य क्रतोर्दिदृक्षयागतेन नानादिगन्तवासिना विद्वज्जनसभाजनेन सबहुमानमाहूय समादिष्टोऽस्मि ।

पारिपार्श्विकः—— वैदेशिकोऽस्मीति पृच्छामि कः पुनरयं त्र्यम्बकमखी नाम ।

सूत्रधारः— किं न जानासि निजगुणगणकुसुमसुरभीकृतदिगन्तमेतमपि । तथा हि—

कुर्वाणः सकलान्यदीयधिषणामालम्ब्य राज्यक्रमा-
नालोक्यानुदिनं निजामुपचितामामोदमानः श्रियम् ।
नित्यं भोसलवंशवारिधिविधुः शाहावनीवासवो
यस्मिन्नेव गुणोज्ज्वले कलयते वाचस्पतेर्गौरवम् ॥

* * * *

पारिपार्श्विकः— (सप्रत्यभिज्ञम् )

एकक्ष्माधिपतेरिदंविधगुणः साचिव्यधुर्यः श्रुतः
प्राज्ञः कश्चिदजातशत्रुसदृशो गङ्गाधरार्याभिधः ।
तैस्तैर्येन निजैरनन्यसुलभैरावर्ज्यमानो गुणै-
राचार्यप्रतिपत्तिमेव कलयन्नासीदमुष्मिन्नृपः ॥

सूत्रधारः—दिष्ट्या जानासि तं महाभागम् । तर्हि तस्यात्मसंभवं नृसिंहरायमखीति सुगृहीतनामधेयं महानुभावमपि भवाञ्जानीयात् ।

पारिपार्श्विकः—बाढं जाने । यस्य किल

कृतः पित्रा बाल्ये निरुपमगुणाढ्यो निजपदे
निजैरेकक्षोणीपतिहृदयमाराध्य चरितैः ।

तदेवायं भूत्वा चरति नियतं मूर्तिमदिति
प्रपञ्चे विख्यातिस्तदितरदुरापा विजयते ॥

सूत्रधारः—तस्यैवायमनुजन्मा ।

पारिपार्श्विकः—ननु तदनुजत्वमेव पर्याप्तं प्रख्यात्यै ।

सूत्रधारः—सत्यमुक्तं भवता ।

पारिपार्श्विकः—संप्रति यज्ञवाटं प्रविष्टोऽहं शालान्तर-प्रविष्टमनतीतकौमारमन्यं कमपि यजमानमद्राक्षम् । तं पुनर्न जानामि ।

सूत्रधारः—कथं न जानासि ।

साचिव्यधुर्यो विहितः पितृव्येणाहृत्य शाहक्षितिपालमौलेः ।
आनन्दनामा विमलप्रसूतिः पुत्रो नृसिंहाध्वरिणः स एषः ॥

सूत्रधारः— तस्यैव त्र्यम्बकरायमखिनः समनन्तरानुजेन भगवन्तरायनामधेयेन संप्रति प्रणीतं राघवाभ्युदयं नाम नाटकमभिनेतव्यमिति ।'

इति भगवन्तरायसचिवकृते राघवाभ्युदयनाटके ।

अतोऽयमानन्दरायमखी श्रीमदप्पय्यदीक्षितानां स्वर्गारोहणकाले १६२६ तमे क्रिस्ताब्दे जातमात्रोऽपि नाभूदिति स्पष्टम् । एवं स्थिते कथमस्य संभाव्येत दीक्षितैः

सह समकालिकता, कथं तरामस्य प्रसज्जेत दीक्षितैरपि माननीयता ।

अपरं च । तस्मिन्नेव दीक्षितवृत्तान्तप्रस्तावे 'दीक्षितानां समानकालिको न्यूनवया राजचूडामणिदीक्षितो भावनापुरुषोत्तमनाटककृत्' इति भट्टश्रीनारायणशास्त्रिणः समाचक्षते । प्रसज्जेतापि दीक्षितैः सह समकालिकत्वं तदपेक्षया न्यूनवयस्कत्वं च श्रीमतो राजचूडामणिदीक्षितस्य । परं तु भावनापुरुषोत्तमं नाटकं राजचूडामणिदीक्षितकृतमित्यसंभावितम् । विशदमेव हि ननु तस्य तत्पितृकर्तृकत्वम् । यथा—

सूत्रधारः—अस्ति खलु निस्तुलनिजवितरणगुणानिरस्तसमस्तस्वस्तरुप्रशस्तिविस्तारः, श्रीकर्णाटसिंहासनप्रतिष्ठापनाचार्यः, अनवरतरचितदशधेनूपधेनुप्रमुखविविधदानपरितोषितमहीसुरनायकालंकृतवेङ्कलाम्बापुर-पोतसमुद्र-शूरसमुद्रप्रमुखमहाग्रहारनिर्माणपारीणः,...फणिसार्वभौम इव श्रीमणिनागपुरवराधीश्वरः,....श्रीवेङ्कलाम्बागर्भशुक्तिमुक्तामणिः, श्रीपोतभूपालसुकृतकल्पतरुपचेलिमफलाकारः, प्रकटतरभुजबलपराक्रमाभ्याम्...अनुजाभ्यां दिवाकरभैरवनायकाभ्यामुद्भासमानः, श्रीशूरप्पनायको नाम ।

* * * *

सूत्रधारः— अस्ति खलु कश्चित्तोण्डीरेषु श्रीशूरसमुद्राभिधानोऽग्रहारः ।

तत्रास्ति कश्चित्तरुणाग्निहोत्री
षड्दर्शनीसागरपारदृश्वा ।
शतावधानीत्यपराभिधानः
श्रीश्रीनिवासाध्वरिसार्वभौमः ॥

*  *  *  *

सूत्रधारः— स एव विश्वामित्रवंशमुक्तामणिः श्रीकृष्णभट्टारकपौत्रः श्रीभवस्वामिभट्टसूनुर्लक्ष्मीगर्भसंभवः श्रीकविवादिगजकेसरी भट्टाचार्यः प्रतिदिनप्रबन्धकर्ता...चोलभूवल्लभेनास्थानीरचितपत्रावलम्बः .... श्रीरत्नखेटश्रीनिवासाध्वरीन्द्रोऽत्र प्रबन्द्धा ।' इति भावनापुरुषोत्तमनाटके ।

एवं यदुच्यते भट्टश्रीनारायणशास्त्रिभिरबुद्धिपूर्वकंताननुसरद्भिश्च कैश्चिच्चिन्नबोम्मनायको विजयनगराधीश इति तस्य पिता कृष्णराज इति, भ्राता नरसिंह इति तञ्जपुराधीश इति च, तत्सर्वमविचारितरमणीयम् ।

श्रीमन्तो दीक्षिता यादवाभ्युदयकाव्यव्याख्यानारम्भे प्रख्यातचन्द्रवंशे पाण्ड्यकुले समुत्पन्नस्य रामराजसुतस्य तिम्मराजस्य सहधर्मचारिण्यां गोपीदेव्यां संजातेन मलयगि-

रिकटकनिकटे रामसेतौ निखानितजयस्तम्भेन राज्ञा चिन्न-तिम्मेन स्वयं नियोजितांस्तद्व्याख्यां कर्तुं व्यवसितांश्चात्मान-माचक्षते । कोऽयं चिन्नतिम्मः, कुत्र वायं राज्यमकरोदित्या-दिकं तु किंचिदपि न परिस्फुरति । चिन्नतिम्मश्चिन्नबोम्म इत्यस्थाने शङ्कामङ्कुरयन्ति केचित् । चिन्नवीरप्पनायकसुत-श्चिन्नबोम्मः, चिन्नतिम्मस्तु तिम्मराजतनूज इति तयो-र्भेदः ।

तत्तादृशनिरतिशयमहिम्नां श्रीमदप्पय्यदीक्षितानां यवी-यसो भ्रातुराच्चादीक्षितस्य पौत्रः सुप्रसिद्धः श्रीमान्नीलक-ण्ठमखीन्द्रः। अस्य नारायणाध्वरी पिता। माता भूमिदेवी। अयं तयोर्द्वितीयो नन्दनः । भ्रातरश्चास्य चत्वारः समभू-वन् । सर्वेऽपि ते सुशिक्षिताः शास्त्रेषु, कवयश्च । परमेक एव तेषु नाम्ना ज्ञायते कुशकुमुद्वतीयनाटकस्य प्रबन्द्धा, अतिरात्रयज्वा । तथा चास्य गङ्गावतरणकाव्ये कथावता-रसर्गे—

'मुनिरस्ति भरद्वाजः ख्यातस्त्रिभुवनेष्वपि ।
अन्नैर्यस्य जहौ रामोऽप्यरण्यभ्रमणश्रमम् ॥ ३८ ॥

तस्यान्वये महत्यासीत्क्षीरोद इव चन्द्रमाः ।
श्रीकण्ठचरणासक्तः श्रीमानप्पय्यदीक्षितः ॥ ३९ ॥

विधित्रयी यदाक्षिप्ता नान्यत्र लभते गतिम् ।
जयन्त इव दुर्दान्तजानकीशशरार्दितः ॥ ४० ॥

आगमैरप्यसंवेद्यमाद्यं यत्तत्त्वमैश्वरम् ।
आकुमारं परिज्ञातं तदेवासीद्यदुक्तिभिः ॥ ४१ ॥

श्रीकण्ठदेशिकग्रन्थसिद्धान्तद्योतचन्द्रिका ।
श्रीमती निर्मिता येन शिवार्कमणिदीपिका ॥ ४२ ॥

गङ्गया यः पुरा स्नातो देवश्चन्द्रार्धशेखरः ।
गाङ्गेयेन पुनः सस्नौ सोऽवतीर्य यदात्मना ॥ ४३ ॥

अमोषणीयैरक्रय्यैरमूल्यैरमलीमसैः ।
यत्प्रबन्धैः शतेनैव भारती परिकर्मिता ॥ ४४ ॥

यं विद्म इति यद्ग्रन्थानभ्यस्यामोऽखिलानिति ।
यस्य शिष्याः स्म इति च श्लाघन्ते स्वं विपश्चितः ॥

नाकेऽपि सति देवानां माहात्म्यकलहे मिथः ।
वादः शाम्यति यद्वाचि विन्यस्य निखिलं भरम् ॥४६॥

आमोदिभिर्वचःपुष्पैरर्चितो येन शंकरः ।
तत्याज काशधुत्तूरधारणोपाहितां रुजम् ॥ ४७ ॥

तत्समानप्रभावस्य तदनन्तरजन्मनः ।
आसीदाच्चादीक्षितस्य पुत्रो नारायणाध्वरी ॥ ४८ ॥

जयन्ति तनयास्तस्य पञ्च सौभ्रात्रशालिनः ।
गर्भदासा महेशस्य कवयश्च विपश्चितः ॥ ४९ ॥

तेषामहं द्वितीयोऽस्मि भूमिदेवीतनूभुवाम् ।
नीलकण्ठ इति ख्यातिं नीतः शंभोः प्रसादतः ॥ ५० ॥

वार्तिकाभरणग्रन्थनिर्माणव्यक्तनैपुणः ।
श्रीवेङ्कटेश्वरमखी शिष्ये मय्यनुकम्पते ॥ ५१ ॥

कुर्वती श्रवणे वाणी कोमलां यस्य साहितीम् ।
कर्णपूरशिरीषेऽपि काठिन्यमिव पश्यति ॥ ५२ ॥

भान्ति शिष्याः पुरो यस्य पाणिविन्यस्तपुस्तकाः ।
तत्सूक्तिजाह्नवीपूरत्रासेनेव धृतप्लवाः ॥ ५३ ॥

सति सह्यसुतातीरे सति त्रय्यन्तशीलने ।
गन्तुं निश्चितवानस्मि गङ्गां केनापि हेतुना ॥ ५४ ॥

तपसा लभ्यतां तस्यास्तपसश्च कठोरताम् ।
पश्यन्वाचा तपस्यामि काव्यसंदर्भरूपया ॥ ५५ ॥'

श्रीनीलकण्ठमखीन्द्रस्य जीवनकालः क्रिस्ताब्दीयसप्तदशशतकपूर्वभाग इति स्पष्टमुपलभ्यते तदीयनीलकण्ठविजयचम्पूकाव्यतः । यतः प्राबध्नात्कविस्तं प्रबन्धमतीतेषु ४७३८ कल्यब्देषु । उच्यते च कविना तेनैव तत्र ग्रन्थे—

‘अष्टात्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु ।
कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥’
इति ।

शिवलीलार्णवमहाकाव्यस्यास्य नवमसर्गे गङ्गारोधसि हिमवत्प्रान्ते देव्यास्तटातकायाः सेनानिवेशमुक्त्वा तत्प्रदेशं वर्णयतोऽस्य मुखात्—

‘रत्नानि तत्र वणिजो भिषजोऽग्रहीषु-
र्दिव्यौषधीर्गजवरानपि राजकीयाः ।
अस्मादृशाः क्षितिसुराः पुनराहरन्त
भागीरथीतटरुहाणि कुशाङ्कुराणि ॥’

इत्ययत्नपूर्वकं निःसरन्त्या वाण्या प्रथमवर्णजत्वमाचारसंपन्नत्वं च सम्यग्व्यज्यते । श्रीकण्ठमतसर्वस्ववेदी चायम् । अस्य दृढोऽभिनिवेशः श्रीमति शैवसिद्धान्त इति प्रतिभासते । स्वयमाह च—‘शैवा वयमा चतुर्वदनात्’ इति वैराग्यशतके, ‘आ गर्भादा कुलपरिबृढादा चतुर्वक्त्रतोऽपि । त्वत्पादाब्जप्रपदनपरान्वेत्सि नश्चन्द्रमौले’ इति शान्तिविलासे च । एवमन्यत्रापि । यथा नीलकण्ठदीक्षितस्य महती प्रथा न तथा श्रीमदप्पय्यदीक्षितेन्द्रतनूभुवामपि । नान्यः कोऽपि तदानींतनेषु तदधिकस्तत्सदृशो

वा दर्शनेषु साहित्ये वा । अयमेव श्रेष्ठः कवीनामस्य समकालिकानाम् । मञ्जुलपदसंनिवेशा विचित्रोल्लेखा रसनिर्भरा विशङ्कटप्रवाहा चास्य साहित्यसरणिः । नैव क्लिश्नाति स्वचेतः परचेतांसि वा केवलं शब्दचित्रेषु यमकेषु वा । 'नीलकण्ठमखिनां सदसि सकृत्प्रविष्टस्यापि समुज्जृम्भते सरसपदसंदर्भवैदग्धी' इत्युद्घोषयति श्रीरामभद्रमखीन्द्रः शृङ्गारतिलकभाणे । अस्य साहित्यवैदग्धी सर्वत्र समं प्रद्योततेऽस्य लघुकाव्येषु महाकाव्येषु च । अस्य लघुकाव्यानि —(१) कलिविडम्बनम्, (२) सभारञ्जनम्, (३) अन्यापदेशशतकम्, (४) शान्तिविलासः, (५) वैराग्यशतकम्, (६) आनन्दसागरस्तवः । एते नीलकण्ठदीक्षितस्य षड्ग्रन्था इति व्यपदिश्यन्ते । अस्य महाकाव्येष्विदमेव श्रेष्ठं द्वाविंशतिसर्गपरिमितं शिवलीलार्णवं नाम काव्यम् । द्वितीयं च गङ्गावतरणं नाम काव्यमष्टसर्गपरिमितम् । गद्यपद्यात्मकं श्रीनीलकण्ठविजयचम्पूकाव्यं चानेन निरमायि । यद्यपि नीलकण्ठविजयचम्पूकाव्य इव नान्यत्रास्य ग्रन्थेषु ग्रन्थनिर्माणकालः प्रोच्यते, तथापि श्रीमदप्पय्यदीक्षितानां स्वर्गारोहणतः परमेव तेषां कलनमिति सुगमम् । यतः— 'द्वासप्ततिं प्राप्य समाः प्रबन्धाञ्शतं व्यधादप्प-

यदीक्षितेन्द्रः' इति शिवलीलार्णवे 'तस्यान्वये महत्यासीत्क्षीरोद इव चन्द्रमाः । श्रीकण्ठचरणासक्तः श्रीमानप्पयदीक्षितः' इति गङ्गावतरणे च संदृश्यते। आनन्दसागरस्तवे— 'त्वय्यर्पितं प्रथममप्पययज्वनैव स्वात्मार्पणं विदधता स्वकुलं समस्तम् । का त्वं महेशि कुलदासमुपेक्षितुं मां को वानुपासितुमहं कुलदेवतां त्वाम्' इत्यत्र 'त्वय्यर्पितं प्रथममप्पययज्वनैव' इत्युक्त्यास्य ग्रन्थस्य निर्वहणकाले दीक्षिता लोकान्तरं प्रविष्टा इति द्योतयति कविः । श्रूयते अन्या अपि सन्ति बह्वयस्तदीयाः कृतयः काव्येषु दर्शनेष्वपीति । तासु च (१) नलचरितनाटकम् , (२) कैयटव्याख्यानम् , (३) शिवतत्त्वरहस्यम्, इत्येता एव नामतो ज्ञायन्ते । गृह्यन्ते च तासां नामानि कुशकुमुद्वतीयनाटके, तस्य तृतीयनन्दनेन गीर्वाणेन्द्रेण कृते शृङ्गारकोशभाणे च । यथा— 'एष खलु द्वितीयशंकररूपाणामप्पय्यदीक्षितानां नप्ता नलचरितनाटकप्रबन्द्धा' इति कुशकुमुद्वतीयनाटके, 'कैयटव्याख्यानाशिवतत्त्वरहस्याद्यनेकप्रबन्धानिर्मातुः... पवित्रकीर्तेर्नीलकण्ठमखिनः' इति पूर्वोक्ते भाणे च समुपलभ्यते । श्रीनीलकण्ठमखीन्द्रो मधुरानगर्यां तिरुमलैनायकमहाराजस्य सदसि पण्डितसार्वभौमोऽमात्यप्रवरश्चाभूत् । तत्पुत्रा

अपि तामेव नगरीमध्यवात्सुरित्ययमंशः सूच्यते तत्पुत्रेण गीर्वाणेन्द्रेणापि 'शृङ्गारकोशो नाम भाण इत्यधुनैव खलु निवेदितं मधुरापुरादागतेन रङ्गकेतुना' इति वाक्येन। श्रीनीलखण्ठदीक्षितस्य अय्यादीक्षित इत्यप्यासीद्भूयान्व्यवहारः। अत्र च तञ्जनगरे वेदमूर्तिजम्बुनाथभट्टानां सरस्वतीभाण्डागारे समधिगम्यते नीलकण्ठविजयचम्पूप्रबन्धस्य प्राचीनं कोशद्वयम्। तत्र कोशद्वयेऽप्यवसानयोर्लिखितं संदृश्यते—'समाप्तं चेदमय्यादीक्षितविरचितं चम्पूकाव्यम' इति। नीलकण्ठमखीन्द्रस्य तथा नामान्तरेणाप्याकारणं न विना कारणम। विदितमेव हि सर्वेषामस्माकमस्मद्देशीयाः प्रायशो बिभ्रति पितामहानां नामेति। तच्च किंचिद्विपरिवर्त्यैव कीर्तयन्ति तन्मातरः स्वश्वशुराणां साक्षान्नामग्रहणमनुचितमिति च। अतः एवं नामपरम्परा आसञ्श्रीमदप्पय्यदीक्षितानां वंशे। यथा— आचार्यदीक्षितः, तत्पौत्र आच्चादीक्षितः, तत्पौत्रः अय्यादीक्षितः इति। श्रीनीलकण्ठमखीन्द्रस्याशयमनुरुन्धान एव सर्वमपि हालास्यनाथस्योत्सवं निरवर्तयत्तिरुमलैनायकमहाराजः[1]। नीलकण्ठमखीन्द्रोऽपि निर्लो-

1. Vide. P. 153, Vol. II., W. Taylor's Oriental Historical Manuscipts.

ड्य शास्त्राणि यथादृष्टं तेषु कारयामास सर्वमप्युत्सवादिकम् । ततः सर्वा अपि लीला भगवतो हालास्यनाथस्य काव्यात्मना निर्ममे कविः । तदेव प्रथते शिवलीलार्णवमहाकाव्यनाम्ना ।

'यः संरम्भः कृतिविरचने दुष्कवीनामभेद्यो
यच्चैकाग्र्यं तदुचितपदान्वेषणे चित्तवृत्तेः ।
लभ्यं तच्चेदपि कवयतामन्ततस्त्रीण्यहानि
स्यादेवं किं सरसकविताराज्यदुर्भिक्षयोगः ॥'

अनेन नीलकण्ठविजयस्थेन श्लोकेन स्वस्य सदापि कार्यबाहुल्यमासञ्जितमिति व्यञ्जयति कविः । तच्च कार्यं राज्यनिर्वहणरूपमित्यनुमीयते ।

श्रीनीलकण्ठमखीन्द्रो वार्तिकाभरणस्य [1]प्रणेतुर्वेङ्कटेश्वरमखिनः शिष्यमात्मानं व्याहरति गङ्गावतरणकाव्ये पूर्वोदाहृतकथावतारसर्गे । अयं वेङ्कटेश्वरमखी वासिष्ठवंशोद्भवः साग्निचित्याप्तवाजपेययाजी । अस्य वेङ्कटेश्वरमखिनः पिता

---

1. राघवानन्द-नीलापरिणय-सभापतिविलासादिनाटकानां प्रबन्द्धा वेङ्कटेश्वरोऽन्य एव । स निध्रुवकाश्यपान्ववायजो धर्मराजमनीषिणः पुत्रो वैद्यनाथसूरिणः पौत्रः, 'मणलूर' पुरवास्तव्यश्च ।

चित्रबन्धरामायणाख्यकाव्यस्य कर्ता वेङ्कटेश्वरस्त्वपरस्तृतीयः । तस्य

श्रीमानद्वैतविद्याचार्यः साग्निचित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजी गोविन्ददीक्षितः। यः कौमारिलदर्शनस्य विश्रुतां व्याख्यां रचयामास। यं तञ्जपुराधिनाथो रघुनाथभूपः स्वार्धासनदानेन सभाजयति स्म। येन स्वकृतसर्वतोमुखमहासत्रे निखानिताश्चिरावस्थितेर्युक्तरूपाः शिला-

---

परम्परा यथा—

(कृष्णातीरवासी बह्वृचकाश्यपः)
तिरुमलैयज्वापरनामधेयः तिम्मयसोमयाजी।
|
यज्ञेशापराभिधानः यज्ञेश्वरः।

(तस्य पुत्रचतुष्कात्प्रथमः)
चरकूरिकोण्डुभट्टः
|
- तिरुमलैयज्वा।
- (गौतमाम्बायामुत्पन्नः) यज्ञेश्वरदीक्षितः। (अयमलंकारराघव-अलंकारसूर्योदय-चित्रबन्धरामायणव्याख्यान-प्रभामण्डलाख्यशास्त्रदीपिकाव्याख्यानादीनां कर्ता।)
  |
  वेङ्कटेश्वरः।
  (चित्रबन्धरामायणकाव्यस्य कवयिता।)

(द्वितीयः)
लक्ष्मणापराभिधानः लक्ष्मीधरः।
(अयमेव पश्चात्संन्यस्तो रामानन्दाश्रमी; षड्भाषाचन्द्रिकायाः, अनर्घराघवव्याख्याया इष्टार्थकल्पवल्लर्याश्च कर्ता।)

यूपाः कावेरीतीरेषु । तथा च रघुनाथविलासनाटके—

‘अस्य श्रीरघुनाथभूवलरिपोरध्यासितार्धासनः
प्रज्ञावैभवखण्डितप्रतिवदत्पाषण्डषण्डस्मयः ।
कुर्वन्व्याक्रियया तिविश्रुततरं कौमारिलं दर्शनं
गोप्ता नित्यगवीरसौ विजयते गोविन्दयज्वाग्रणीः ॥

चत्वारः कृतसर्वतोमुखमहासत्रेण गाढं शिला-
यूपा येन निखानिताः प्रतिदिशं युक्तं चिरावस्थितेः ।
सौराज्यं रघुनाथभूमिपतिना संप्रापिते क्ष्मातले
पारेसह्यसुतं वृषेण वसता पादा इव स्थापिताः ॥

अयमेव गोविन्ददीक्षितो रघुनाथनृपाङ्कितं संगीतसुधा-निधिं नाम संगीतप्रबन्धमपि कृतवानिति वेङ्कटेश्वरमखिकृ-तायाश्चतुर्दण्डिप्रकाशिकायाः प्रतीयते । यथा—

‘ततो नु रघुनाथेन्द्रमेलवीणा निरूप्यते ।
तल्लक्षणं तु संगीतसुधानिधिरिति श्रुते ॥
चेव्वयाच्युतभूपालरघुनाथनृपाङ्किते ।
अस्मत्तातकृते ग्रन्थे प्रोक्ताञ्श्लोकाँल्लिखामि तान् ॥

इति श्रीमदद्वैतविद्याचार्य.... श्रीगोविन्ददीक्षितनागमा-म्बावरतृतीयनन्दनस्य, साग्निचित्यसर्वक्रतुयाजियज्ञनाराय-

णदीक्षिताव्यवहितानुजस्य, अच्युतविजयराघवभूपालप्रेरितस्य वेङ्कटेश्वरदीक्षितस्य कृतौ चतुर्दण्डिप्रकाशिकायां.... प्रकरणम्' इति। असौ गोविन्दमखीन्द्रो रघुनाथभूमिपालस्य पित्राच्युतभूपालेनापि नितरां संभावितस्तन्मन्त्री च बभूव। तत्र श्लोकममुं पठन्ति पुराविदः पण्डिताः—

'त्रिनामाद्यन्तनामानौ महीक्षिद्दीक्षितावुभौ।
शस्त्रे शास्त्रे च निपुणावाहवेषु हवेषु च॥'

श्लोकस्यास्य पूर्वार्धेनाच्युतभूमिपालगोविन्ददीक्षितावुच्येते। अच्युतानन्तगोविन्देति प्रसिद्धक्रमं नामत्रयमत्र विवक्ष्यते। अयं रघुनाथभूपस्य पितुः अच्युतभूपालस्यापि मन्त्री बभूवेत्ययमंशः साहित्यरत्नाकरकाव्यतोऽपि नितरां स्पष्टीभवति। यथा—

इत्यात्मजं निजमसाविममच्युतेन्दु-
रत्यादरेण धृतनीतिमथादधानम्।
आविष्प्रमोदमुचितामवलोक्य वाणीं
गोविन्दयज्वतिलकं गुणवानवादीत्॥

सौम्ये भाविनि वासरे शुभतरे शौण्डीर्यमुख्यैर्गुणैः
प्रख्यातं रघुनाथनामकममुं प्रौढापदानं सुतम्।

क्षिप्रं त्वं चतुरर्णवीपरिवृतक्षोणीतलप्राभवे
कुर्याः कौतुकतोऽभिषिक्तमखिलैर्गोविन्दयज्वाग्रणीः ॥

कुर्वंस्तद्वचनं वतंसमुचितं गोविन्दयज्वा ततः
पौराणामभिषेकमङ्गलकृते प्रावीवृतत्संभ्रमम् ।
सोऽपि श्रीरघुनाथभूमिरमणः स्वावासगेहं मुदां
प्राग्भारेण समं समाविशदतिप्रह्वैः परीतो नृपैः ॥

सर्वौषधैर्दधिमधुद्रवसंभृतैस्त-
मुच्चार्य मन्त्रमुचितं स्वहुतावशेषैः ।
गोश्रृङ्गकोशनिहितै रघुनाथभूपं
गोविन्दयज्वगुरुरभ्यषिचन्मनीषी ॥

असौ गोविन्ददीक्षितो महाराजतः स्वयं प्रतिगृह्य बहूनग्रहारान्ब्राह्मणेभ्यो ददौ । मध्यार्जुने मायूरे कुम्भघोणे पञ्चनदक्षेत्रेऽन्यत्र च स्थलेषु पारेसह्यसुतं स्थानघट्टान्पुष्पमण्डपानि च रचयामास । यान्यद्यापि संदृश्यन्ते सुदृढानि । किं तु कचित्कचित्कोणेषु जीर्णानि, न पुनरिदानींतनेन केनापि धर्मबुद्धिनाद्यापि समुद्धृतानि । कदाचिदयं गोविन्ददीक्षितः शिष्यान्कल्पतरुमध्यापयन्ददर्श तत्रागताञ्श्रीमतोऽप्पय्यदीक्षितेन्द्रान् । इयेष च तान्कानिचित्संशयस्थानानि कल्पतरौ विवरीतुम् । विवरणे तदीयां पटुतां सं-

वीक्ष्य प्रार्थयामास तान्कल्पतरोर्व्याख्यानं कर्तुम् । श्लोकोऽयं गोविन्ददीक्षितस्येत्युदाहरन्ति जनाः—

'अप्पदीक्षित किमित्यतिस्तुतिं
वर्णयामि भवतो वदान्यताम् ।
सोऽपि कल्पतरुरर्थसिद्धये
त्वद्गिरामवसरं प्रतीक्षते ॥' इति ।

श्लोकममुं बालकविनोक्तं व्याहरन्ति केचित् । अन्ये पुनर्नलचरितनाटकस्थमामनन्ति । परं तु तस्मिन्नाटके केन कस्मिन्प्रसङ्गे श्लोकोऽयमुदाहृत इति लेशतोऽपि न दर्शयन्ति ।

अस्ति हरिवंशसारचरितं नाम त्रयोविंशतिसर्गपरिमितं महाकाव्यं गोविन्दमन्त्रिकृतम् । यतः समधिगम्यते तस्य व्याख्या श्रीमदप्पय्यदीक्षितकृता । परमिदमद्य निश्चिनुमः नैव सोऽयं गोविन्दमन्त्री योऽध्यासितार्धासनः समं रघुनाथभूपेनेति । यतो हरिवंशसारचरितस्य प्रबन्द्धा गोविन्दमन्त्री शाण्डिल्यवंशोत्पन्नस्य कोण्डमनायकमन्त्री चेत्येवं तद्ग्रन्थव्याख्यानतः प्रतीयते । हरिवंशसारचरितस्य मूलकोशस्त्वद्य नोपलभ्यत इति श्लोकोऽयमुद्धृतो व्याख्यानतः—

'शाण्डिल्यान्वयहारमौक्तिकमणिः श्रीधल्लिमन्त्री (?) पिता
माता यस्य पतिव्रतैकमहिमाकल्पा च कुप्पाम्बिका ।

तस्य श्रीहरिवंशसारचरिते गोविन्दमन्त्रिप्रभोः
सर्गः पूर्तिमगान्निसर्गललितः काव्ये महत्यादिमः ॥'

श्रीवेङ्कटेश्वरमखिनो ज्यायान्सोदरो विद्यागुरुः साग्नि-चित्यसर्वप्रष्ठाप्तोर्यामयाजी श्रीयज्ञनारायणदीक्षितः । अख-ण्डितमस्य पाण्डित्यं सर्वेष्वपि व्याहारेषु । सुशिक्षितोऽयं काव्यसरणौ । अयं रघुनाथभूपेनादृतो रघुनाथभूपविजय-रघुनाथविलासनाटक-साहित्यरत्नाकरकाव्यादिकांस्तमेव रा-जानमधिकृत्य निर्ममे ग्रन्थान् । ददावस्मै यज्ञनारायणदी-क्षिताय कर्णाभरणं निजं पतकं पादाङ्गदं कङ्कणं च रघुनाथ-भूपालः । अयं स्वयमाध्वर्यवं चकार स्वपितृकृते आप्तवाजपे-यनाम्नि सप्ततन्तुवर्ये । अस्य समकालिकाः पण्डितमणयः– (१) विधुतालंकारिकविबुधाहंकारः कृष्णयज्वा, (२) डि-ण्डिमकुलमण्डनः पण्डितशिखामणिः सोमनाथः, (३)पारि-जातनाटकस्य प्रबन्द्धा रघुनाथभूपालाश्रितः कुमारताताचार्यः, (४)श्रीमान्राजचूडामणिदीक्षितः, (५) आत्मपरीक्षापरनाम्नो भास्करदीक्षितीयस्य तप्तमुद्राविद्रावणस्य च तत्त्वविवेकादिकृतो नृसिंहाश्रमियोगिनोऽन्तेवासिन उमामहेश्वराचार्यस्य पुत्रो भास्करदीक्षितः । तथा च तप्तमुद्राविद्रावणे——

'उमामहेश्वराचार्यांश्चोलावनिशिखामणीन् ।

तातपादानहं नौमि सर्वतन्त्रप्रवर्तकान् ॥

उमामहेश्वराचार्यतनूजो भास्कराध्वरी ।
अस्ति कोनेरिराजेन्द्रपुरवासी बुधोत्तमः ॥

वैतानकर्मनिवहे विहितैकभावां
निर्व्याजवाचमपि ये परपूरुषस्य ।
तन्वोत्सुका विदधते स हि तप्तमुद्रा-
विद्रावणं वितनुते विनयाय तेषाम् ॥ इति ।

तथा चात्मपरीक्षायाम्—

' नित्यानर्तितहेमदानमहिम........
........रघुनाथनायकमणौ सर्वंसहां शासति ।
तत्ताद्दक्षकटाक्षवीक्षणकलासंभूतभाग्योदयः
कुर्वे भास्करदीक्षितोऽहमनघं ग्रन्थं बुधो...... ॥

*　　*　　*　　*

अस्मत्तातगुरून्वन्दे नृसिंहाश्रमियोगिनः ।
येषां तत्त्वविवेकाद्याः कृतयः कृतिजीविकाः ॥'

श्रीवेंकटेश्वरमखिनः कृतिषु टुप्टीकाव्याख्यानं वार्तिकाभरणमेकमेव लभ्यते । चोदितोऽनेनैव रचयामास तन्त्रशिखामणिं श्रीमान्राजचूडामणिदीक्षितः प्रख्यातः कर्ता काव्यदर्पणस्य ।

श्रीनीलकण्ठदीक्षितस्य समकालिका विद्वन्मणयः– (१) श्रौतधर्म इव मूर्तिमांश्चोक्कनाथमखीन्द्रः। अयं कौशिकगोत्रोद्भवः। द्वादशाहादियज्वनो नारायणदीक्षितस्य पुत्रः प्रख्यातरामभद्रमखीन्द्रस्य श्वशुरः पदविद्यागुरुश्च। शब्दकौमुदी-धातुरत्नावली-भाष्यरत्नावलीनां कर्ता। भाष्यरत्नावल्याम्—

'श्रीमद्वीथिविटङ्कशंकरकृपासारीभवत्साहिती-
त्रैविध्येन कृतार्थयन्कविवरान्विद्वज्जनग्रामणीः।
श्रीगोविन्दमखीन्द्रनन्दनमखिश्रीयज्ञनारायण-
स्फीतादृष्टकृतोदयो विजयते श्रीवेङ्कटेशाध्वरी॥
तेनायं प्रहितः फणीश्वरफणामाणिक्यसंमण्डिते
त्यागेशाङ्घ्रियुगे फणीन्द्ररचितां तां भाष्यरत्नावलीम्।
सार्थामप्रयतेऽर्थपुष्टिनिपुणां प्रीत्यै भवानीपते-
र्निष्कर्षज्वलितां तमःप्रणुदतीं श्रीचोक्कनाथः सुधीः॥
श्रीमद्वाक्यपदप्रमाणगहनप्रच्छादितोच्चावच-
स्फीतार्थप्रतिपादनातिनिपुणः श्रीनीलकण्ठाध्वरी।
यं भाष्यप्रकटीकृतौ पटयते द्वेधार्थदानात्कृती
तस्यान्ये सुधियः कथं न विमलाः पुष्णीयुरर्थप्रदाः॥'

इति।

(२) श्रीरामचन्द्रोदयमहाकाव्यस्य कर्ता स्वयं तद्वथा-

*S. 000

ख्याता च महाकविः श्रीवैष्णवः श्रीवेङ्कटेश्वरः । अयं गतेषु १५१८ संख्याकेषु शालिवाहनशकेषु, तथा १५९५–९६ क्रिस्ताब्देषु, काञ्चीनगरसमीपे श्रीनिवासार्यतो जनिमुपगतः । अयमतीतेषु ४८३६ कल्यब्देषु तथा गतेषु १५५७ शालिवाहनशकाब्देषु स्वस्य चत्वारिंशे वयसि काशीं गत्वा तत्रैव काव्यमिदं समग्रन्थयत् । तथा च रामचन्द्रोदयमहाकाव्ये—

'अभ्रपूर्णगुणपावनपद्यं व्योमवह्निसमसर्गमुदारम् ।
काव्यमङ्गगुणशैलयुगाब्दे वेङ्कटोऽकृत कलौ कविवर्यः ॥'

[ व्याख्या— अभ्रपूर्णगुणपावनपद्यम् आकाशवत्पूर्णगुणानि पावनानि पद्यानि यस्य । त्रिंशताधिकात्रिसहस्रपद्यमित्यर्थः । ३०३० । व्योमवह्निसमसर्गं व्योमवन्निर्मला वह्निवदुज्ज्वलाः सर्गा यस्मिंस्तत् । त्रिंशत्सर्गमित्यर्थः । तत्काव्यम् । कलौ अङ्गगुणशैलयुगाब्दे सति षट्त्रिंशदधिकसप्तशताधिकचतुःसहस्रवर्षे सति । वेङ्कटः कविः । अकृत प्रणीतवान् । ] (३) कवेरस्य नीलकण्ठमखीन्द्रस्यानुजन्मा कुशकुमुद्वतीयनाटकस्य प्रबन्द्धा प्रतिरघुवंशादिकर्ता [1]चित्रमी-

1. अस्य च ग्रन्थस्यादर्शपुस्तकमेकमादिमपत्रविहीनं मध्यार्जुनवास्तव्यानामण्णावाजपेयिनां कोशसंचये समस्ति । Vide. Pp. 51

मांसादोषधिकारस्य कवयिता अतिरात्रयज्वा । कुशकुमुद्वतीयनाटके—

'विद्वद्वादविवादकालयुगपद्विस्फूर्त्यहंपूर्विका-
निर्यद्युक्तिसहस्रदर्शितनिजाहीन्द्रावताराकृतिः ।
कर्तुं कारयितुं तथा रमयितुं काव्यानि नव्यान्यलं-
भूष्णुर्भाति सभासभाजितमतिः श्रीनीलकण्ठाध्वरी ॥

अयं किल भरद्वाजकुलपारावारः सकलसाम्राज्यसिंहासनाधिपतिस्तत्रभवतः श्रीमतो नारायणाध्वरिणस्तपःपरिपाकः कर्ता काव्यानां व्याकर्ता तन्त्राणामाहर्ता क्रतूनां व्याहर्ता सकलनृपसभेषु दिगन्तविश्रान्तकीर्तिरपारमहिमा मानवाकृतिः साक्षादेव दाक्षायणीवल्लभः श्रीकण्ठमतसर्वस्ववेदी श्रीनीलकण्ठाध्वरी ।...एष खलु द्वितीयशंकररूपाणामप्पय्यदीक्षितानां नप्ता नलचरितनाटकप्रबन्द्धा ।

नटी—को णु किंणामहेओ एअणाडअप्पणेदा ।

सूत्रधारः—नन्वस्यैव सभानेतुरनुजन्मा विदितवेदितव्यः कविलोकमित्रमतिरात्रयाजी । ... स किल प्रतिरघुवंशादिकर्तेति रसिकगोष्ठीषु जोघुष्यते ।' इति ।

---

and 126, Second 'Reports on Sanskrit Manuscripts' by Dr. E. Hultzsch.

(४) शब्दचित्रस्वरूपभेदप्रतिपादकस्य चित्ररत्नाकरग्रन्थस्य रुक्मिणीपरिणय-जानकीपरिणय-गौरीपरिणय-द्रौपदीपरिणयादीनां च कर्ता श्रीचक्रकविः । चित्ररत्नाकरे—

'श्रीलोकनाथं जनकं रामचन्द्रं पतञ्जलिम् ।
नत्वाग्रजं च क्रियते चित्ररत्नाकरो मया ॥
रुक्मिणीजानकीगौरीद्रौपदीपरिणीतयः ।
कृतयो यस्य तस्यैषा कृतिश्चक्रकवेः शुभा ॥

पुत्रं चक्रकविं गुणैकवसतिः श्रीलोकनाथः सुधी-
रम्भा चाजनयत्सतीजननुता यं मानितं सज्जनैः ।
षष्ठस्तस्य कृतावजायत परिच्छेदो नुते पाण्ड्यरा-
ट्चोलोर्वीपतिनीलकण्ठमखिभिः श्रीचित्ररत्नाकरे ॥' इति ।

(५) कौण्डिन्यगोत्रोद्भवः श्रीरामभद्रमखीन्द्रः । उच्यते चानेन स्वयमेव—

'..............................
स एष सरसः कविर्जयति रामभद्रः सुधीः ॥
यश्चतुर्वेदयज्वेन्द्रवंशवारिधिकौस्तुभः ।
यस्य कण्डरमाणिक्यग्रामो भवति जन्मभूः ॥

यस्मै किल निखिलविद्वज्जनश्लाघनीयवैदुष्यशालिनो

वदावदशिष्यसहस्रविभाव्यमाननिजप्रभावाः श्रौतधर्मा इव मूर्तिमन्तस्तत्रभवन्तश्चोक्कनाथमखिप्रवरा वितीर्णवन्तोऽपि प्रथमामात्मकन्यामन्यामिव पुनरपि स्नेहेन निरवद्यां वितरन्ति स्म पदविद्याम् ।'

'यस्य स्तौति मतिं मनीषिसदसि श्रीनीलकण्ठाध्वरी
कोण्डाज्यौतिषिकश्च यस्य कुरुते संमानमार्यैः समम् ।
यस्यानुग्रहदृष्टिमर्पयति च श्रीबालकृष्णो गुरुः
सोऽयं दीव्यति चोक्कनाथमखिनामक्रीतदासः कविः ॥'

'नीलकण्ठमखिनां सदसि सकृत्प्रविष्टस्यापि समुल्लसति सरसपदसंदर्भवैदग्धी । [1]अस्य पुनः कवेस्तदीयशिष्यस्य विशिष्य तद्भजनानुरक्तस्य किमु वक्तव्यम् ।'

'सतां तेनार्पिते राज्ञा शाहराजपुराभिधे ।
अग्रहारे स्थितिमता रामभद्रेण यज्वना ॥

पाणिनेः परिभाषाणां वृत्तिर्व्याख्यायतेऽधुना ।
इदं शृण्वन्तु करुणां विधायास्मिन्विपश्चितः ॥' इति ॥

श्रीमतो नीलकण्ठदीक्षितस्य कति पुत्राः समजनिषतेति सम्यङ् न ज्ञायते । परं तु तस्य तृतीयनन्दनेन गीर्वाणेन्द्रेण

1. रामभद्रमखिनः

निर्वर्तितः शृङ्गारकोशनामा भाणः समुपलभ्यते। यत्र च—

'अस्त्यस्तोकगुणो हिमाद्रिशिखरोत्सङ्गापतज्जाह्नवी-
साहंकारतरङ्गसंघसहजश्रीहारिसूक्तिक्रमः।
किं चोन्मूलयितुं मनश्च सुदृढीकर्तुं कलासु प्रभुः
सर्वज्ञो हरिदन्तविश्रुतयशाः श्रीनीलकण्ठाध्वरी॥

अपि च,

यस्मिन्क्षोणिभुजां सभासु विदुषामग्रेसरे जातुचि-
त्स्वातन्त्र्यं विविधं विवृण्वति निजं सर्वासु विद्यास्वपि।
जायन्ते गगनप्रचोदितदृशः स्तब्योपलब्धिक्रमाः
स्वेदाम्भःकणसिक्तसर्वतनवो दीनाः प्रतिद्वन्द्विनः॥

तस्य भरद्वाजकुलजलधिकौस्तुभस्य कैयटव्याख्यान-शिवतत्त्वरहस्याद्यनेकप्रबन्धनिर्मातुरद्वैतविद्यागुरोर्भगवत्याः परदेवताया एव पुरुषावतारस्य पवित्रकीर्तेर्नीलकण्ठमखिनस्तृतीयनन्दनेन तदीयचरणारविन्दपरिचरणलब्धनिखिलविद्येन तत्पुत्रतानुगुणसाहितीकेनाभिनिर्वर्तितः शृङ्गारकोशो नाम भाणः' इति वर्तते।

अद्यावध्यस्मदुपलब्धपर्यालोचनयास्मिन्विषये पर्यवसितोंश इयानेवेत्यद्योपरम्यत इति शम्।

टी. एस्. कुप्पुस्वामिशास्त्री।

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

# List of Illustrations.

TO FACE PAGE.

॥ श्रीः ॥

# ॥ प्रतिमासूची ॥

॥ श्रीः ॥

# ॥ शिवलीलार्णवः ॥

---*---

पूतं स्वतः पूततरं ततो य-
    द्गाङ्गं पयः शंकरमौलिसङ्गात् ।
तत्पातु मातुः प्रणयापराध-
    पादाहतैः पूततमं ततो नः ॥ १ ॥

अशक्यमङ्गान्तरवद्विभक्तु-
    मणुप्रमाणं करणं यदन्तः ।
सामान्यभूतं शिवयोस्तदेकं
    सानुग्रहं स्यान्मयि गर्भदासे ॥ २ ॥

अन्विष्य खिन्नं निगमानशेषा-
    नमी न मीनं प्रथमं स्मरामः ।
अन्विष्यमाणं निगमैरशेषै-
    रम्ब स्तुमस्ते वयमक्षिमीनम् ॥ ३ ॥

स्तन्येन कश्चित्कवयांबभूव
 ताम्बूलसारेण परो जनन्याः ।
अहं ततोऽप्युन्नतिमाप्तुकामः
 सेवे ततोऽप्युन्नतमक्षिकोणम् ॥ ४ ॥

अर्धे तनोरद्रिसुतामयोऽस्मी-
 त्यहंयुना किं फलमादियूना ।
गीर्वाणयोगीन्द्रमुपास्महे तं
 सर्वात्मना शैलसुतात्मको यः ॥ ५ ॥

कालेन शंभुः किल तावतापि
 कलाश्चतुःषष्टिमिताः प्रणिन्ये ।
द्वासप्ततिं प्राप्य समाः प्रबन्धा-
 ञ्शतं व्यधादप्पयदीक्षितेन्द्रः ॥ ६ ॥

अनाहतोद्भूतमपास्तभेद-
 माद्यं शिवस्यौपयिकं विधातुः ।
नादाभिधं पारगमध्वनां त-
 दनुत्तरं ज्योतिरनुस्मरामः ॥ ७ ॥

साहित्यविद्याजयघण्टयैव
संवेदयन्ते कवयो यशांसि ।
यथा यथास्यां ध्वनिरुज्जिहीते
तथा तथा सार्हति मूल्यभेदान् ॥ ८ ॥

यावत्कवेर्मार्दवमुक्तिबन्धे
यावद्धियः श्रोतरि कोमलत्वम् ।
तावद्ध्वनौ तद्व्यतिभेदमूले
तारत्वमालंकृतिका वदन्ति ॥ ९ ॥

अस्मिन्महत्यस्तमितान्यवेद्ये
विसृत्वरे वीचितरङ्गरीत्या ।
काव्यध्वनौ जाग्रति देहभाजां
कर्णे विशेयुः कथमन्यशब्दाः ॥ १० ॥

कीर्णानि घण्ठापथ एव हन्त
शब्दार्थरत्नानि गिरां सवित्र्या ।
अत्यादरादामृशतां कवीनां
दृग्गोचरं कस्यचिदेव यान्ति ॥ ११ ॥

प्रायस्तिरोभूतमहाप्रकाशाः
पाषाणखण्डेष्विव चन्द्रकान्ताः ।
शब्देषु शब्दा मिलिताश्चरन्ति
भाग्योत्तराः प्रत्यभिजानते तान् ॥ १२ ॥

यानेव शब्दान्वयमालपामो
यानेव चार्थान्वयमुल्लिखामः ।
तैरेव विन्यासविशेषभव्यैः
संमोहयन्ते कवयो जगन्ति ॥ १३ ॥

गायन्ति वीणा अपि वेणवोऽपि
जानन्ति बालाः पशवोऽपि चेदम् ।
काव्यानि कर्तुं च परीक्षितुं च
द्वित्रा भवेयुर्न तु वा भवेयुः ॥ १४ ॥

सव्यं वपुः शब्दमयं पुरारे-
रर्थात्मकं दक्षिणमामनन्ति ।
अङ्गं जगन्मङ्गलमैश्वरं त-
दर्हन्ति काव्यं कथमल्पपुण्याः ॥ १५ ॥

स्तोतुं प्रवृत्ता श्रुतिरीश्वरं हि
न शाब्दिकं प्राह न तार्किकं वा ।
ब्रूते तु तावत्कविरित्यभीक्ष्णं
काष्ठा परा सा कविता ततो नः ॥ १६ ॥

कर्णं गतं शुष्यति कर्ण एव
संगीतकं सैकतवारिरीत्या ।
आनन्दयत्यन्तरनुप्रविश्य
सूक्तिः कवेरेव सुधासगन्धा ॥ १७ ॥

पश्येयमेकस्य कवेः कृतिं चे-
त्सारस्वतं कोशमवैमि रिक्तम् ।
अन्तः प्रविश्यायमवेक्षितश्चे-
त्कोणे प्रविष्टा कविकोटिरेषा ॥ १८ ॥

वक्रोक्तयो यत्र विभूषणानि
वाक्यार्थबाधः परमः प्रकर्षः ।
अर्थेषु बोध्येष्वभिधैव दोषः
सा काचिदन्या सरणिः कवीनाम् ॥ १९ ॥

सदर्थमात्रग्रहणात्प्रतीता
सर्वज्ञता सापि शशाङ्कमौलेः ।
प्राप्ता विकासं प्रतिभा कवीनां
व्याप्नोति यद्वेत्ति न तच्छिवोऽपि ॥ २० ॥

उल्लङ्घ्य तन्त्रान्तरसंप्रदाया-
नुत्प्रेक्षमाणा जगदन्यदन्यत् ।
कस्माद्बिभीमः कवयो भवामः
काव्यज्ञदण्डाद्बिभिमस्तु कामम् ॥ २१ ॥

तन्त्रान्तरेषु प्रतिपाद्यमाना-
स्ते ते पदार्था ननु ते त एव ।
निर्वेदभीशोकजुगुप्सितान्य-
प्यायान्ति साहित्यपथे रसत्वम् ॥ २२ ॥

अर्थावबोधेऽपि समे रसज्ञै-
रन्विष्यते सत्कविसूक्तिरेव ।
अपत्यलाभेऽपि समे विदग्धा
रूपोत्तरामेव हि रोचयन्ते ॥ २३ ॥

व्यामोहयन्ती विविधैर्वचोभि-
 र्व्यावर्तयन्त्यन्यकलासु दृष्टिम् ।
कालं महान्तं क्षणवन्नयन्ती
 कान्तेव दक्षा कविता धिनोति ॥ २४ ॥

चिन्तासु संसर्गविशेषलाभे
 संदर्भणे चाथ पदैः पदानाम् ।
पुनर्विमर्शे च भवन्कवीना-
 मानन्दभूमा वचसामसीमा ॥ २५ ॥

अनायतप्राणमसंयताक्ष-
 मब्रह्मचर्यानशनादिखेदम् ।
चित्तं महेशे निभृतं निधातुं
 सिद्धः कवीनां कवितैव योगः ॥ २६ ॥

तिर्यङ्मनुष्यव्यातिरेकहेतु-
 र्देव्या गिरामेव कटाक्षपातः ।
प्रज्ञाविशेषास्तु परे जनानां
 प्रायो दिशन्ति श्वसृगालसाम्यम् ॥ २७ ॥

न कालभेदाद्रसवर्णभेदो
न जामिता वा न ऋजीषभावः ।
सारस्वतं नाम फलं तदेत-
त्सदैकरूपं कृतिनो लभन्ते ॥ २८ ॥

वाल्यं विदुः प्राकृतभाषितानि
श्रुतिस्मृतीर्वृद्धदशां वदन्ति ।
साहित्यमेकं तु गिरां सविज्या-
स्तारुण्यमुद्राढमुशन्त्यभिज्ञाः ॥ २९ ॥

क्वार्थाः क्व शब्दाः क्व रसाः क्व भावाः
क्व व्यङ्ग्यभेदाः क्व च वाक्यरीतिः ।
कियत्सु दृष्टिः कविना न देया
किमस्ति राज्ञामियतीह चिन्ता ॥ ३० ॥

आवर्णशक्तिग्रहमापवर्गं
दुःखैकरूपा विरचय्य विद्याः ।
विश्रान्तिहेतोः कवितां जनानां
वेधाः सदानन्दमयीं किमाधात् ॥ ३१ ॥

सिद्धं पदं सिद्धतरस्तदर्थः
साध्या पदानां परमानुपूर्वी।
तन्मात्रसारे कवितापदेऽस्मि-
न्कियद्विधात्रा कृतमुच्चनीचम् ॥ ३२ ॥

तान्येव शास्त्राणि त एव शब्दा-
स्त एव चार्था गुरुवस्त एव।
इयान्विशेषः कवितापथेऽस्मि-
न्देव्या गिरां दृक्परिवर्तभेदः ॥ ३३ ॥

पदानि भव्यान्यपि काव्यरीति-
मस्थानदत्तानि न शोभयन्ते।
नासाग्रलग्नेन भवेन्मुखश्री-
स्ताटङ्कबिम्बेन कथं तरुण्याः ॥ ३४ ॥

साहित्यविद्यां पदमेकमेव
सर्वानवद्यामपि हन्ति दुःस्थम्।
दन्तावलिं मौक्तिकदामरम्यां
दंष्ट्रेव वक्त्राद्बहिरुल्लसन्ती ॥ ३५ ॥

अन्योन्यसंसर्गविशेषरम्या-
ऽप्यलंकृतिः प्रत्युत शोचनीया ।
निर्व्यङ्ग्यसारे कविसूक्तिबन्धे
निष्क्रान्तजीवे वपुषीव दत्ता ॥ ३६ ॥

विद्वत्प्रियं व्यङ्ग्यपथं व्यतीत्य
शब्दार्थचित्रेषु कलेर्विलासात् ।
प्राप्तोऽनुरागो निगमानुपेक्ष्य
भाषाप्रबन्धेष्विव पामराणाम् ॥ ३७ ॥

कृते युगे व्यञ्जनयावतीर्णा
त्रेतायुगे सैव गुणीबभूव ।
आसीत्तृतीये तु युगेऽर्थचित्रं
युगे तुरीये यमकप्रपञ्चः ॥ ३८ ॥

दिष्ट्याधिरूढाः कविताधिराज्यं
धीरा रमन्ते न हि शब्दचित्रे ।
स्वर्गेऽपि गत्वाप्सरसां निवासे
काणैव किं कापि गवेषणीया ॥ ३९ ॥

मत्वा पदग्रन्थनमेव काव्यं
मन्दाः स्वयं तावति चेष्टमानाः ।
मज्जन्ति बाला इव पाणिपाद-
प्रस्पन्दमात्रं प्लवनं विदन्तः ॥ ४० ॥

कालाद्बहोः कान्यपि दुष्पदानि
लब्धानि मन्दः परितो विकीर्य ।
छिद्राणि लोष्टैरथ पांसुभिश्च
संपूरयन्विस्मयते विलज्जः ॥ ४१ ॥

अद्यैकमेकं कुधियः परेद्यु-
रन्येद्युरेकं च पदं निबध्य ।
शुक्तं क्वचित्पर्युषितं क्वचिच्च
कोष्णं क्वचिच्चारचयन्ति पद्यम् ॥ ४२ ॥

आपूर्य वक्त्रं लशुनैर्विधाता
किं निम्बसारैः कुधियामसिञ्चत् ।
न चेत्कथं वाचि ततः क्षरन्त्यां
स पूतिगन्धः स च तिक्तभावः ॥ ४३ ॥

लभेय निन्दामपि सत्कवीनां
सद्व्यङ्ग्यसौरभ्यरसैर्वचोभिः ।
न तु प्रशंसामपि दुष्कवीनां
दुर्गन्धिभिर्वीतरसैरमीभिः ॥ ४४ ॥

विवक्षितार्थप्रतिपादकं ये
विन्यासभेदं न विदुः पदानाम् ।
दुःखावहोऽर्थः स्फुरितोऽपि तेषां
दौर्भाग्यभाजामिव पुत्रलाभः ॥ ४५ ॥

दुर्मेधसः शुष्कतरां कठोरां
दुर्गन्धसान्द्रां गिरमुद्गिरन्तः ।
कालं चिरं हन्त कथं व्यथन्ते
श्रोतुर्दशातः स कियत्तमोंऽशः ॥ ४६ ॥

शृण्वन्तु ते दुष्कवितां परेषां
श्रोत्रेषु तप्तं जतु यैर्निषिक्तम् ।
शब्दार्थयोर्दुष्कविवक्रभाजोः
किं दुष्कृतं स्यादवधारयन्तु ॥ ४७ ॥

श्राम्यन्ति यावत्कवयः परेऽपि
श्राम्यन्ति तावच्च ततोऽधिकं च ।
गर्भोद्भवादिः प्रसवावसानः
क्लेशो हि दुष्पुत्रसुवां च तुल्यः ॥ ४८ ॥

दाक्षिण्यहानिर्जगतां विधातु-
र्देव्या गिरां दुर्मरणस्य योगः ।
पापं जनस्येति च सर्वमेत-
त्समाहृतं दुष्कवितानिदानम् ॥ ४९ ॥

आब्रह्मघातादघशोधनानि
स्मरन्ति ये ते परमर्षयोऽपि ।
यावत्तदात्मान्वयिताधियैव
न सस्मरुर्दुष्कवितासु शुद्धिम् ॥ ५० ॥

स्वोक्तिं मुषित्वा पुरतः पठन्तं
स्वस्यैव पश्यन्कविसाहसाङ्कम् ।
प्राज्ञो जनः किं प्रतिपद्यतां त-
माहन्तु वा स्वोदरमाहतां वा ॥ ५१ ॥

निन्दन्तु वाचं मधुरां कवीनां
नन्दन्तु च स्वां गिरमेव मूर्खाः ।
नाद्यां स्वरीत्या रसयन्तु जातु
नान्यां पठन्तु स्वपतोऽपि पार्श्वे ॥ ५२ ॥

हिंसा पशूनां क्रतुमध्यलग्ना
स्वर्गे यथास्तेऽक्षयदुःखहेतुः ।
किंचिच्छुभं पातकमध्यलग्नं
तथा मुदे स्यादपि दुष्कवीनाम् ॥ ५३ ॥

प्राचेतसव्यासमुखाः कवीन्द्राः
प्राञ्चोपि किं दुष्कविभिर्विरक्ताः ।
काव्यानि कर्तुं शतशः क्षमास्ते
कथं न चेदासत काकवन्ध्याः ॥ ५४ ॥

स्थूलाभिरभ्युल्लिखितानि धीभिः
स्थूलानि मन्ये कुकवेर्वचांसि ।
कथं न चेत्कर्णपुटं प्रवेष्टु-
मेतानि यत्नादपि नोत्सहन्ते ॥ ५५ ॥

वाचं हतो यद्यपि ते तथापि
न मूकता दुष्कवितैव दोषः ।
आद्या यदेकस्य विषादहेतुः
प्राणोपरोधाय परा बहूनाम् ॥ ५६ ॥

वाचं विपञ्चीमिव वादयन्ति
कर्णामृतेन ध्वनिना कवीन्द्राः ।
मूर्खाः स्वमेधामुसलप्रहारै-
र्विनाशयन्त्येव विचेष्टमानाः ॥ ५७ ॥

शक्यं सुखं ग्रन्थयितुं प्रबन्धा-
ऽशक्यस्तु न श्रोतृजनानुरोधः ।
श्रान्ते सति क्वापि कवौ यदेष
सर्वस्वनाशादिव खेदमेति ॥ ५८ ॥

अचुम्बितोल्लेखपथप्रवृत्ता-
नसंप्रदायेन कवीन्क्षिपन्ति ।
पथा प्रवृत्तान्प्रहतेन मूर्खाः
पश्यन्त्यवज्ञामुकुलीकृताक्षाः ॥ ५९ ॥

रसं रसज्ञाः कलयन्ति वाचि
परे पदार्थानपरे पदानि ।
वस्त्रं कुविन्दा वणिजो विभूषां
रूपं युवानश्च यथा युवत्याम् ॥ ६० ॥

पाठप्रकारैः पदयोजनाभि-
स्तात्पर्यदुर्निश्चयतश्च मन्दैः ।
आयास्यमानां गिरमात्मनो ये
कर्णे न कुर्वन्ति त एव धन्याः ॥ ६१ ॥

एको हि दोषः परकीयतैव
पद्येषु सर्वेष्वपि दुर्जनानाम् ।
तस्मिन्पुरस्थेऽपि कियद्यतन्ते
वृथैव ते दोषगवेषणाय ॥ ६२ ॥

आनन्दथुर्ब्रह्मविदां यदेकस्ते
व्यङ्ग्यलाभेषु शतं कवीनाम् ।
एते सहस्रं पुनरर्बुदं वा
परोक्तिदोषस्फुरणे खलानाम् ॥ ६३ ॥

प्राचीनपद्यभ्रमतः प्रवृत्ताः
स्तोतुं खलाः प्रेक्ष्य कविं पुरस्तात् ।
येनान्यथाकर्तुमिदं यतन्ते
क्लेशेन तेषां हि स एव दण्डः ॥ ६४ ॥

दोषः क्वचित्कश्चिदिति प्रतीतः
प्राचामलंकारविदां प्रवादः ।
सर्वप्रबन्धानुगतस्तु मन्ये
कर्तुः कवेर्जीवनमेव दोषः ॥ ६५ ॥

मुधैव वाक्येषु पदेष्वधीतं
मुधैव दीर्घं कवितापथेऽपि ।
आवश्यकं यत्किल पामराणा-
मावर्जनं तन्न किमप्यधीतम् ॥ ६६ ॥

निसर्गतो निर्गुणमुक्तिगुम्फं
समर्थयन्ते सगुणं बलाद्ये ।
ते कञ्चुलीसंनहनोन्नतेन
लम्बस्तनेनापि मुदं लभन्ते ॥ ६७ ॥

पाण्डित्यलोभो यदि पामराणां
कामं विहिंसन्तु कलास्त्रिषष्टिम् ।
कस्तेऽपराधः कविते गृहीतः
किमस्ति ते किंचन पूर्ववैरम् ॥ ६८ ॥

वाचं कवीनामुपलालयन्त्यां
भुङ्क्ते रसज्ञो युवतिं युवेव ।
तामेव भुङ्क्ते ननु तार्किकोऽपि
प्राणान्हरन्भूत इव प्रविष्टः ॥ ६९ ॥

अर्थेष्वलंकारविदः प्रमाणं
शब्देषु नः शब्दविदो मुनीन्द्राः ।
के तान्त्रिकाणां कवयो भवन्ति
के वा कवीनामपि तान्त्रिकाः स्युः ॥ ७० ॥

घट्टोपविष्टानिव वाग्भिरर्थैः
काव्यागमज्ञानुपसान्त्वयामः ।
आप्लुत्य भल्लूकवदापतन्तः
कथं नु जय्या इह गौतमीयाः ॥ ७१ ॥

अप्यन्तिकस्थैरविभावनीयः
सूक्ष्मः प्रकृत्या मृदुसूक्तिजन्मा ।
कुतर्कविद्याव्यसनोपजातैः
कोलाहलैर्न ध्वनिरेष वेद्यः ॥ ७२ ॥

गुणान्न गृह्णन्तु खलास्ततः किं
गृह्णन्तु दोषानपि वा ततः किम् ।
अपि व्यतिस्तामुभयं ततः किं
गुणोऽपि दोषो यदि दुःसहं तत् ॥ ७३ ॥

क्व ब्रह्मलोकः क्व गिरां सवित्री
क्व भूमिभागाः क्व वयं वराकाः ।
दिष्ट्योपलब्धामपि देवतां तां
विक्रीणते वृत्तिकृते विमूढाः ॥ ७४ ॥

दुष्पण्डिताराधनदुःखशीला-
त्कष्टादमुष्मात्कविताधिकारात् ।
वरं जगत्यामिह मूकभावो
वरं च तिर्यक्तृणगुल्मभावः ॥ ७५ ॥

प्रायो जडा मत्सरिणश्च लोका
　दोषोत्तरं मृग्यगुणं वचो नः ।
गुणैकलुब्धोऽपि जनः कचित्स्या-
　दित्याशयैवायमियान्प्रयासः ॥ ७६ ॥

वेदाहमेतं पुरुषं महान्त-
　मित्यामनन्तो निगमाः सगर्वम् ।
श्रान्ताः कृता येन स एव देवो
　वर्ण्यः कथं वाङ्मनसातिवर्ती ॥ ७७ ॥

शब्देषु चार्थेषु परं यतिष्ये
　तथा यथा मां गुरवो विनिन्द्युः ।
चमत्कृतिं तत्र कथं निधास्ये
　न मत्कृतिर्यत्क्रमते तदंशे ॥ ७८ ॥

काहं क काव्यं कविराजसाध्यं
　काहं क शंभुर्निगमैरगम्यः ।
निःशङ्कमेवंविदपि प्रवर्ते
　निर्लज्जते देवि तव प्रसादात् ॥ ७९ ॥

दत्ते त्वया वाङ्मयरत्नकोशे
विक्रीय भुक्तं किल भुक्तमेव ।
शिष्टं त्वदङ्घ्र्योः पुनरर्पयेयं
दयस्व मीनाक्षि पुरेव मह्यम् ॥ ८० ॥

शब्दा यद्वदनं प्रपद्य मृदुतामाशासतेऽन्यादृशी-
मर्था यद्धिषणाप्रवाहपतनादिच्छन्ति जिज्ञास्यताम् ।
यत्कीर्तिस्पृहया शिवोऽपि निगमान्ग्रश्नाति सर्गादिषु
प्राचस्तान्कवितापितामहपदारूढान्कवीन्प्रस्तुमः ॥ ८१ ॥

इति प्रथमः सर्गः ॥



## द्वितीयः सर्गः ॥

---

अस्ति क्षितेराभरणायमानः
पारेसमुद्रं स हि पाण्ड्यदेशः ।
आशामगस्त्याध्युषितां गतोऽपि
सर्वोत्तरो यो जगति प्रतीतः ॥ १ ॥

आस्थाय वैराग्यमनुत्तमं य-
स्त्रैलोक्यलक्ष्मीं न तृणाय मेने ।
यदाधिपत्यस्पृहया स एव
देवो दधे सुन्दरपाण्ड्यरूपम् ॥ २ ॥

सुदुष्करं यत्प्रतिसर्गमेव
पश्यन्मुनिः प्राग्विरराम सर्गात् ।
न शुष्कया सान्त्वगिरा सुराणां
किं गाधिसूनोरपि शान्तिरस्ति ॥ ३ ॥

मन्दानिलोऽसौ मलयानिलोऽसौ
गन्धानिलोऽसाविति यं युवानः ।
संभावयन्ते चलितैः शिरोभिः
स कोऽपि यत्कोणभवः समीरः ॥ ४ ॥

आकारिता यत्र मखेषु विप्रै-
रालोकयन्तो विबुधाः समृद्धिम् ।
युष्मान्यजामो वयमर्पयध्वे
युष्मत्पदं चेदिति सान्त्वयन्ते ॥ ५ ॥

तपोवनेऽन्यत्र तपश्चरन्तो
दिवं भजन्ते यदि युक्तमेतत् ।
ततोऽधिके यत्र तपस्वितां हि
तत्रैव युक्तः सुचिरं निवासः ॥ ६ ॥

मृत्पिण्डरूपो जनको यदीयः
पितामहो यस्य कुलाल एव ।
स कुम्भजन्माजनि सूत्रकारः
कोणे वसन्कापि चिरं यदीये ॥ ७ ॥

सौभाग्यलक्ष्मीं नवचन्दनानां
मन्दानिलानामपि मौक्तिकानाम् ।
अयातयामामभिनिर्विशन्ति
प्रायेण कौमारहरा यदीयाः ॥ ८ ॥

यत्रोभयानुच्चतरान्रसाला-
नालक्ष्य विन्ध्यस्मयभङ्गदक्षान् ।
तपस्यति न्यस्तभरः सुखेन
तेष्वेव मैत्रावरुणिर्महर्षिः ॥ ९ ॥

उपत्यकामण्डलनिर्विशेषे
देशे हि यस्मिन्मलयाचलस्य ।
उदेति मन्दं व्यजनानिलोऽपि
चमत्कृतश्चन्दनसौरभेण ॥ १० ॥

पदे पदे चन्दनकाननस्थैः
फणाधरैर्यत्र निपीयमानः ।
जातः प्रभूतोऽपि बहिः प्रसर्प-
न्मन्दः किलैवं मलयानिलोऽभूत् ॥ ११ ॥

मन्दानिलं मन्मथमूलकन्दं
  यत्रोपयोक्तुं मुनयस्त्रसन्तः ।
वैयाघ्रचर्मव्यजनोपजातै-
  र्वातैर्व्रतं केचन वर्तयन्ते ॥ १२ ॥

अयत्नलभ्यं रथमद्भुतानि
  शरासकाण्डानि शरानसङ्ख्यान् ।
यत्रैव पश्यञ्जगदेकवीरः
  स्थिरं मनोजः शिबिरं चकार ॥ १३ ॥

ताम्रातरङ्गानिलताडितासु
  माकन्दवाटीषु मनोजवीरे ।
यत्रावतीर्णे महता बलेन
  तद्वाहुगुप्तास्तरुणा रमन्ते ॥ १४ ॥

वर्षोपला यत्र हि मौक्तिकानि
  काष्ठानि गन्धद्रुमकाण्डखण्डाः ।
कस्तेन विस्पर्धितुमुत्सहेत
  देशः शिलाकण्टकपूरितोऽन्यः ॥ १५ ॥

स्वर्गं नवं स्रष्टुमना मुनिः प्रा-
क्ससर्ज यत्संमुखदेश एव ।
तन्मारुतस्पन्दनमात्रतोऽपि
स्वर्भोगभाग्यं सुलभं विजानन् ॥ १६ ॥

अन्या विशन्त्यः सरितः समुद्र-
मापूरयन्ते जलजन्तुभिः स्वैः ।
रत्नापगा यत्र तु संपतन्ती-
रत्नाकरत्वं रमणस्य दत्ते ॥ १७ ॥

यत्सङ्गमादेव भवन्ति मुक्ताः
सा जाह्नवी सर्वजनीनमेतत् ।
ततो विदुर्दक्षिणजाह्नवीति
तादृग्विधां यत्र हि ताम्रपर्णीम् ॥ १८ ॥

दत्ते सुतां स्वामिव यां समस्तै-
रलंकृतां रत्नगणैरगस्त्यः ।
सरस्वते गोत्रमहत्तराय
यतो गृहीता हरिणापि वेदाः ॥ १९ ॥

अभ्यापतन्तीमनुवासरं या-
मगस्त्यगोत्रप्रभवेति सिन्धुः ।
विकीर्य पुष्पैरिव मौक्तिकौघैः
प्रत्युद्व्रजन्प्रापयते किमन्तः ॥ २० ॥

स्रोतोमुखैरम्बुनिधिं प्रविष्टं
स्वभावतः स्वादु यदीयमम्भः ।
निर्मथ्य लब्धं त्रिदशैः कदाचि-
दास्वाद्यतेऽद्यापि सुधा सुधेति ॥ २१ ॥

क्षारोदकास्वादभवं विपाक-
मपाकरिष्यन्निव कुम्भजन्मा ।
जहाति शैलं मलयं न जातु
पातुं प्रकृत्या मधुरं यदम्भः ॥ २२ ॥

यां सर्वरत्नैकखनिं विहाय
गङ्गामधात्केन गुणेन शंभुः ।
का प्रीतिरर्के सति कैतकेऽपि
न हीश्वराः पर्यनुयोज्यशीलाः ॥ २३ ॥

वैडूर्यनीलोपलमौक्तिकानि
यदादिमध्यान्तसमुद्भवानि ।
सा ताम्रपर्णी सरिदेव यत्र
साधारणी काचन सारणीव ॥ २४ ॥

तस्मिन्विशाले तरुणेन्दुमौले-
रावासभूतं पदमद्भुतानाम् ।
वनं जगत्पावनमस्ति किंचि-
न्नीपद्रुमाणां निकषा वृषाद्रिम् ॥ २५ ॥

अज्ञाततिग्मांशुकरावमर्शा
छाया यदीया तमसां विहन्त्री ।
वातेरितं पुष्परजो यदीयं
निःशेषमुन्मार्ष्टि रजः प्रजानाम् ॥ २६ ॥

अन्तर्निलीनभ्रमरैः प्रसूनै-
राभाति यद्बद्धरजोभिरीषत् ।
सत्त्वेन निर्जित्य रजस्तमश्च
संमूर्छितेनेव समन्ततोऽपि ॥ २७ ॥

यत्राभिषिञ्चन्ति मधु क्षरन्तो
वृक्षा भुवं मूर्तिमिवाष्टमूर्तेः ।
झंकुर्वते कर्णरसायनानि
सामानि गायन्त इव द्विरेफाः ॥ २८ ॥

वक्त्राणि यस्मिन्मुनिपादपाना-
माभान्ति पुष्पाण्यतिनिर्मलानि ।
समाहृता मुक्तिजुषां प्रदातुं
शशाङ्कखण्डा इव शंकरेण ॥ २९ ॥

संपूर्यमाणात्प्रतिपौर्णमासं
शाखाग्रसंघट्टनतोऽवधूतात् ।
मृगाङ्कबिम्बाद्गलिता इवोर्व्यां
मृगाः शतं यत्र परिभ्रमन्ति ॥ ३० ॥

प्रत्यर्थिनो यत्र महेश्वरस्य
तत्तत्क्षणोदन्तविचारणाय ।
चारा नियुक्ता इव मन्मथेन
चरन्ति भृङ्गाः सममन्यपुष्टैः ॥ ३१ ॥

प्रागम्बयाथ प्रमथाधिपेना-
    प्यध्यासिते यत्र कदम्बमूले ।
माकन्दजम्बूवटपादपानां
    मन्दाक्षमन्दानि कुलान्यभूवन् ॥ ३२ ॥

शाखासु शाखासु फलानि यत्र
    भान्तीव नाना परमार्थतस्तु ।
सर्वागमानां फलमेकमेव
    संदृश्यते तच्च कदम्बमूले ॥ ३३ ॥

तृणीकृते यत्र वसद्भिरार्यै-
    श्चराचरेऽस्मिन्पशवश्चरन्ति ।
वैकुण्ठवासोऽपि तृणीकृतस्तै-
    र्न चेत्कुतोऽसौ हरिणादृतः स्यात् ॥ ३४ ॥

पुष्पाय वृक्षाग्रपदाधिरूढा-
    न्पुत्रान्मुनीनामुपलालयन्तः ।
व्याजेन देवास्तपसोऽभिसंधिं
    पृच्छन्ति नित्यं परिशङ्कमानाः ॥ ३५ ॥

रोमाञ्चसान्द्रा इव कुड्मलौघै-
　रुदश्रुपूर्णा इव शीथुवृष्ट्या ।
भस्मानुलिप्ता इव पुष्पधूल्या
　दृष्ट्वा मुनीन्यत्र भवन्ति नीपाः ॥ ३६ ॥

यस्मिन्महेशानकराश्रयेण
　केनापि कुल्येन कृतावलम्बाः ।
मृगा निरातङ्कलवाश्चरन्ति
　मृगादनैः प्रत्युत सेव्यमानाः ॥ ३७ ॥

व्याहन्यमाना मृगयासु यस्मि-
　न्व्याघ्राः शिवत्वं प्रतिपद्य सद्यः ।
अस्मत्कुलीनोऽसि महानसीति
　हन्तॄन्किरातानुपसान्त्वयन्ते ॥ ३८ ॥

दृष्टेष्विवानुश्रविकेषु यस्मि-
　न्धीरा वितृष्णा इति नाद्भुताय ।
स्वर्गाधिके धामनि संवसन्तः
　स्वर्ग्याणि कर्माणि किमाद्रियेरन् ॥ ३९ ॥

पाणौ मृगं पार्श्वतले किरातीं
पर्यङ्कबन्धे च गजं महान्तम् ।
संमानयन्नेव चरत्यरण्ये
पञ्चाननः कोऽप्यधुनापि यस्मिन् ॥ ४० ॥

यद्बादशान्तैकविभावनीयं
वश्यन्तदृश्यं कथमस्तु तन्नः ।
इत्यध्यवस्यैव तदावसन्ति
ब्रह्मर्षयः पाशुपता महान्तः ॥ ४१ ॥

वल्ल्यो यदीयाः कठवल्लिकाद्याः
शाखाश्च माध्यन्दिनकाण्वमुख्याः ।
सर्वागमस्तोममयस्य तस्य
शक्नोति को वर्णयितुं प्रभावम् ॥ ४२ ॥

तस्मिन्कदम्बद्रुममूलसीम्नि
तपःपरीपाकफलं जनानाम् ।
आस्ते जगन्मङ्गलमङ्गजारे-
र्लिङ्गं दयाविग्रहवत्त्वलिङ्गम् ॥ ४३ ॥

यद्बृंहितं वाग्भिरकृत्रिमाभि-
यद्द्रष्टुकामा मुनयो यतन्ते ।
नाम्ना च रूपेण च सुन्दरं त-
त्प्रत्यक्षमास्ते प्रियकस्य मूले ॥ ४४ ॥

पाण्ड्यार्पिता भात्यधुनापि यस्मि-
न्नृज्वायता वेत्रनिपातरेखा ।
नानारहस्यागमबोधनीयां
नादात्मतामस्य विवृण्वतीव ॥ ४५ ॥

समस्तदिव्यागमसंप्रतीते
तारात्मके तत्र महेशलिङ्गे ।
अर्धेन्दुरर्धेन्दुतयैव दृष्टो
बिन्दुस्तु सिन्धुः स्तिमिता जटाग्रे ॥ ४६ ॥

मूलं च मौलिं च विवेक्तुकामौ
यस्याक्रमेतां विधिरच्युतश्च ।
तन्मूलमेतत्तरुमूलगम्यं
तन्मौलिरेतत्तरुमौलिवेद्यः ॥ ४७ ॥

छन्नं प्रसूनैः स्नपितं मरन्दै-
रलंकृतं भोगिभिरापतद्भिः ।
इत्थं स्वयं पूजितमस्ति नित्यं
स्वायंभुवं सुन्दरनाथलिङ्गम् ॥ ४८ ॥

एकं किल ब्रह्म यदद्वितीयं
वक्तुं चतस्रः श्रुतयोऽपि नालम् ।
तादृग्विधान्येव भजन्ति तस्य
ब्रह्माणि पञ्चावयत्वमुद्राम् ॥ ४९ ॥

तस्मिन्नहंपूर्विकया विशद्भि-
रपास्तबन्धैरधुनापि जीवैः ।
संबाधदुःस्थैरजनिष्ट लिङ्गे
सार्वत्रिकी दन्तुरतेति शङ्के ॥ ५० ॥

चिद्रूपमानन्दमयं च वेदाः
शैवं वपुः शाश्वतमामनन्ति ।
दयामयं तेऽपि विदुर्न जातु
दृष्टं तदत्रैव कदम्बमूले ॥ ५१ ॥

गूढं भवामीत्यभिमानमात्रं
गूढं परं ज्योतिरिदं कथं स्यात् ।
यन्मूर्धनि प्रत्युत चन्द्ररेखा
तेनैव तत्प्रैक्षि कदम्बमूले ॥ ५२ ॥

ख्याताः कला यद्यपि तत्र लिङ्गे
पञ्चैव सिद्धाः शिवशासनेषु ।
तथापि तेनाध्युषिते तु देशे
कलाश्चतुःषष्टिरपि स्फुरन्ति ॥ ५३ ॥

कृष्णार्जुनाभ्यां परिपूज्य लिङ्ग-
मासादिताः सिद्धय इत्यवेत्य ।
कस्तूरिकाभिर्घनसारकैश्च
लिम्पन्ति लोकाः खलु लिङ्गमेतत् ॥ ५४ ॥

यत्पीठिकाधस्पदमात्रलग्ना
वाणी बहिर्न क्रमते कथंचित् ।
तत्कारणेशत्रितयातिवर्ति
लिङ्गं कया वर्णयितव्यमुक्त्या ॥ ५५ ॥

सदाभिषिक्तं विबुधस्रवन्त्या
सदा समभ्यर्चितमिन्दुना च ।
लिङ्गं तदैशं विजने वनेऽपि
लोकत्रयक्षेमकरं बभूव ॥ ५६ ॥

कूजत्सु वन्येषु विहङ्गमेषु
गायत्सु चाखण्डलगायनेषु ।
प्रीतिं दधे तुल्यवदेव देवः
कस्तद्दृशा तेषु भवेद्विशेषः ॥ ५७ ॥

विनोद्यते यः किल योगिबृन्दै-
र्विद्याधरैरप्सरसां गणैश्च ।
व्याधैर्मृगैः पक्षिभिरप्यरंस्त
स देवदेवश्चिरमत्र लिङ्गे ॥ ५८ ॥

अन्तर्हितावस्थितमत्र लिङ्गे
तमारराधुस्तरवः प्रसूनैः ।
शृङ्गाग्रकण्डूयनतः कुरङ्गा
निर्मोकपट्टार्पणतो भुजङ्गाः ॥ ५९ ॥

संध्यासु संध्यासु गणैरदृश्यै-
रारात्रिकं साधितमस्फुटं यत् ।
चक्रे जरज्जम्बुकवक्त्रलग्नै-
र्ज्वलद्भिरेतज्ज्वलनैः प्रकाशम् ॥ ६० ॥

वन्यद्विपेष्वन्यतमो गणेशो
व्याधार्भकेष्वेकतमः कुमारः ।
साप्यादिशक्तिः शबरीषु कापि
भूत्वा विजह्रुः सविधे पुरारेः ॥ ६१ ॥

इत्थं परिभ्राम्यति कालचक्रे
प्रणश्यति प्रोद्यति च प्रपञ्चे ।
देवेषु योगिष्वपि केऽपि केऽपि
शनैरबुध्यन्त रहस्यमेतत् ॥ ६२ ॥

प्रत्यग्दृशा प्राक्तनपुण्ययोगा-
दाप्तोपदेशैरनुमानतश्च ।
क्रमाद्द्युलोके बहुलीबभूव
कदम्बकान्तारकथाप्रसङ्गः ॥ ६३ ॥

दूरात्प्रणेमुः कतिचिद्वनं त-
  दारात्परे नीपतरूनपश्यन् ।
विचिक्युरेके तदनुप्रविश्य
  धन्याः परे तद्ददृशुश्च लिङ्गम् ॥ ६४ ॥

आनन्दजैरश्रुभिरभ्यषिञ्च-
  न्नानर्चुरप्यक्षिभिरेव फुल्लैः ।
न्यवेदयन्तापि नितान्तधौत-
  मात्मानमानन्दसुधाप्लुतं ते ॥ ६५ ॥

गूहत्सु युष्मास्वपि गूढमेत-
  द्रहस्यमद्राक्ष्म वयं किलेति ।
अनुश्रवान्केचिदुपालभन्त
  केचिद्विधिं केऽपि शिलादसूनुम् ॥ ६६ ॥

वागीश्वरा वाग्भिरपूजयन्त
  ध्यानाध्वनीना हृदि दध्युरेनम् ।
बाह्यार्चनामात्रपरायणास्तु
  सामग्र्यलाभादलभन्त खेदम् ॥ ६७ ॥

अभ्रापगावारिभिरभ्यषिञ्च-
न्सुधान्धसः सुन्दरनाथलिङ्गम् ।
तत्रासमर्था मुनयो महीस्था-
स्तस्तम्भिरे केवलमश्रुपूर्णाः ॥ ६८ ॥

आलक्ष्य पूजाव्यवसायमेषा-
मपामभावात्परमं च खेदम् ।
दीनानुकम्पानिधिरिन्दुमौलि-
र्दिव्यं सरस्तत्र विधातुमैच्छत् ॥ ६९ ॥

स दक्षिणस्यां दिशि बाणपाते
सरो विधास्यन्नमृतांशुमौलिः ।
सकृद्विलासादिव निर्बिभेद
तीक्ष्णेन भूमिं त्रिशिखाञ्चलेन ॥ ७० ॥

आविध्य शूलं भुवि सद्य एव
पादाङ्गदं पश्यति सुन्दरेशे ।
भक्तस्य ते न क्षतिरस्ति जातु
शेषः सुखीत्याह सुता हिमाद्रेः ॥ ७१ ॥

आविध्यमानात्त्रिशिखाभिघातै-
रधःकपालाज्जगदण्डभित्तेः ।
अम्भो यदण्डावरणायितं त-
द्बुद्बुदं तत्क्षणमुद्बभूव ॥ ७२ ॥

त्रैविक्रमे कर्मणि शार्ङ्गिणापि
प्रवर्तितं यत्किल पूर्वमम्भः ।
अधोगतिं प्राप तदेव लेभे
शिवास्त्रयोगाद्गतिमित्थमूर्ध्वाम् ॥ ७३ ॥

दिदृक्षमाणेन महाद्भुतं त-
च्छिवेन यावन्नमितो न मौलिः ।
तावत्सरस्तत्कृतमुत्तरङ्गं
ततः स्रवन्त्या विबुधस्रवन्त्या ॥ ७४ ॥

सरस्त्रिशूलप्रभवं पुरारे-
स्तथात्यगाधं तदभूत्क्षणेन ।
यथात्र देवोऽवतरन्प्लवेत
त्रिविक्रमः क्रान्तजगत्त्रयोऽपि ॥ ७५ ॥

नौर्वान्न रामान्न च कुम्भयोने-
र्यस्यास्ति भीतिस्तदवेक्ष्य तीर्थम् ।
आश्वासमाजग्मतुरर्णवस्थौ
शश्वत्तनौ तावपि कूर्ममीनौ ॥ ७६ ॥

आविर्भवन्तीः सलिले समन्ता-
दम्भोजिनीरुत्पलिनीश्च तस्मिन् ।
दृशौ पिबन्त्यौ परमस्य धाम्नः
प्रीतिं परां प्रापतुरर्कचन्द्रौ ॥ ७७ ॥

त्रैगुण्यरूपं त्रिशिखं हि शंभो-
र्धीरा जगत्कारणमामनन्ति ।
तत्संप्रसूतेऽपि सरस्यमुष्मि-
न्का हेतुचिन्ता कमलोत्पलानाम् ॥ ७८ ॥

शैवालनीलं बहिरम्बुजाभ-
मन्तर्घटैरुद्ध्रियमाणमच्छम् ।
त्रैगुण्यरूपं त्रिशिखोद्भवं त-
दम्भो निजान्हेतुगुणान्व्यनक्ति ॥ ७९ ॥

प्राचीनमब्जं परिहृत्य सद्यो
जग्राह भानुर्जलजं तदीयम् ।
अत्रैव लक्ष्मीः स्थितिमाबबन्ध
चतुर्मुखोऽतश्चकमे प्रसूतिम् ॥ ८० ॥

आचामत स्नात सरस्यमुष्मि-
न्नस्याम्भसा मामभिषिञ्चतेति ।
देवान्महर्षीनपि चान्वगृह्णा-
द्वाचा भगिन्या विभुरागमानाम् ॥ ८१ ॥

खातं शूलशिखाञ्चलेन सलिलैः पूतं जटातीर्थजैः
प्रत्यक्षेण च शांभवेन विधिना प्राप्तं परां ग्राह्यताम् ।
तीर्थं तत्प्रतिपद्य तापसगणा भागीरथीं तत्यजु-
र्मन्दं चादरमादधुः सुरगणा मन्दाकिनीस्रोतसि ॥८२॥

इति द्वितीयः सर्गः ॥



# तृतीयः सर्गः ॥

---

अथ जातु पुरंदरः सुधर्मा-
मधितिष्ठन्सह सप्तभिर्दिगीशैः ।
अविजेयमनुक्षणोपचित्या
विमतं वृत्रममन्त्रयद्विजेतुम् ॥ १ ॥

चतुरङ्गमिदं महद्बलं न-
श्चतुरं गन्तुमहो न यत्समीपम् ।
न बलं भुजयोः क्रमेत तस्मि-
न्नवशादञ्जलिबन्धशिक्षितौ यौ ॥ २ ॥

अमृताशनजातिमात्रजेत-
र्यैलमस्त्राणि न तत्र दैवतानि ।
परिवृत्य पतेयुरासुराणि
प्रबलं यूथपतिं तमेत्य सद्यः ॥ ३ ॥

निकृतिं शरणं वृणीमहे चे-
न्नियमादापदियं क्षमा तरीतुम् ।
निर्ऋतिं परिपृच्छतामुमर्थं
स हि नः पुण्यजनेषु संप्रतीतः ॥ ४ ॥

असुरा हि भवेम युध्यमानाः
कपटेनेति यदि स्थितं मतं वः ।
असुरत्वमपेक्षितं चिरान्नः
सुरभावादतिगर्हितादमुष्मात् ॥ ५ ॥

स हि संप्रति सागरान्तरीपे
क्वचिदालम्ब्य निराश्रयं समाधिम् ।
अविशङ्कितमास्थितस्तपस्यां
सुखजय्यो यदि रोचते भवद्भ्यः ॥ ६ ॥

इति वादिनि वल्लभे सुराणा-
मनुजज्ञुर्हरिदीश्वराः सहर्षम् ।
प्रकृतिर्ह्यपथे रुचिः प्रजानां
किमुत स्वामिनि तादृशेऽपि लब्धे ॥ ७ ॥

स हि यत्र तपश्चकार वृत्र-
स्तदनुप्राप्य तपोवनं महेन्द्रः ।
परमेण समाधिनोपविष्टं
पविना तं विनिपातयांबभूव ॥ ८ ॥

कृतकृत्यममुं निवर्तमानं
कियदप्यप्रतिसंदधानमेनः ।
विकृता वपुषा विकीर्णकेशी
सममेवानुससार वृत्रहत्या ॥ ९ ॥

पुनरेत्य यथापुरं सुधर्मां
पुरुहूतः स्तुवतो विसृज्य देवान् ।
अवरोधमभीप्सुरालुलोके
विशतीं स्वेन सहैव वृत्रहत्याम् ॥ १० ॥

अवकीर्य पविं विकीर्य केशा-
नसमालोच्य च कृत्यमाप्तवर्गैः ।
स तयानुगतः पलायत द्रा-
क्समरेष्वप्रतिमल्लसाहसोऽपि ॥ ११ ॥

अपथं तदभीक्ष्णमादृतं यै-
रपि साक्षादुपदिष्टमादितश्च ।
जहसुः प्रथमं त एव शक्रं
प्रकृतीनां प्रभवत्स्वयं स्वभावः ॥ १२ ॥

विपिनाद्विपिनं गिरीन्गिरिभ्यो
जलराशेर्जलराशिमन्ततश्च ।
जगतो जगदप्ययं प्रधाव-
न्मुमुचे नैव तया धियेव जीवः ॥ १३ ॥

निपुणं स पुरंदरो विलिल्ये
सरसि क्वापि सरोजनालतन्तौ ।
शतशः समुपात्तसप्ततन्तो-
रवलम्बाय बभूव कोऽपि तन्तुः ॥ १४ ॥

अवलोक्य तदन्तरं चिकीर्ष-
न्नहुषो नाम नृपोऽधिकारमैन्द्रम् ।
अनियन्तृकताविषादमग्नै-
रनुमेने कथमप्यमर्त्यलोकैः ॥ १५ ॥

अयथावदनुष्ठिताश्वमेधः
    कियता चैष दिवं गतः शुभेन ।
प्रभुतामपि वर्तयन्सुराणां
    प्रकृतिं स्वां न जहौ तमःप्रधानाम् ॥ १६ ॥

पृथिवीमनुशासतः पुरा ये
    रिपवस्तस्य महीभुजो बभूवुः ।
अधुना विषयेष्वसावमीषा-
    मशिषद्वारिमुचो न वर्षतेति ॥ १७ ॥

अहमस्म्यभिवर्धुकः प्रजानां
    यजनीयश्च ततोऽहमेव तासाम् ।
क इमे हविषो मखे नराणा-
    मिति सर्वानयमाक्षिपत्सुधाशान् ॥ १८ ॥

सवनोपनतं हविः समस्तं
    मयि संवेदय मद्गृहीतशेषम् ।
प्रतिपादय तस्य तस्य पश्चा-
    दिति मूढः प्रशशास हव्यवाहम् ॥ १९ ॥

उदधेः सुरसिन्धुतोयपूर्णा-
दुदपद्यन्त यदद्भुताः पदार्थाः ।
तदियं निपुणं विशोधनीये-
त्यखिलं गाङ्गमवाकिरत्स तोयम् ॥ २० ॥

अवनेर्दिवमागतान्स्वयूथ्या-
नसकृत्तेषु च शीलितस्वभावान् ।
स हि मूलबलं समग्रहीत्स्वं
न विशश्वास निसर्गदैवतानि ॥ २१ ॥

बहुभिस्तुरगैर्गजैश्च भाव्यं
द्युतरून्याचत यद्यमी न दद्युः ।
विनिपातयतेति वीतशङ्कं
वनपालान् प्रशशास वैधवेयः ॥ २२ ॥

अवितीर्णफला उपासिता अ-
प्यवनिस्थेन पुरात्मना सुरा ये ।
द्विगुणं त्रिगुणं च निर्दयैस्ता-
न्दनुजैरेव स दण्डयाम्बभूव ॥ २३ ॥

अमरैः प्रतिमासमद्यमानं
कुलकूटस्थमवेक्ष्य खेदितोऽसौ ।
अवनाय समादिदेश भृत्या-
न्सितपक्षात्यय एव शीतभानोः ॥ २४ ॥

स स मित्रमभूदमुष्य यं यं
पुरुहूतो विरुरोध दानवेषु ।
कथयन्ति कथाममुष्य ये ये
कुपितोऽयं ज्वलति स्म तेषु तेषु ॥ २५ ॥

शयितुं परिवर्तितुं च बिभ्य-
न्नयनैर्निर्निमिषैः स सर्वगात्रे ।
नयनानि विभज्य निर्जरा मे
प्रतिगृह्णन्त्विति संदिदेश मूर्खः ॥ २६ ॥

मृगपक्षिसरीसृपा मनुष्याः
पशवो ये निहतास्त्वयाश्वमेधे ।
त इमे विचरन्ति हन्तुकामा
इति तं शश्वदभीषयन्त देवाः ॥ २७ ॥

इयमेव शचीति दर्शयन्तो
गणिकां कामपि निर्जराः सुराणाम् ।
अतिसंदधिरे सुखेन मूढं
प्रभुता का प्रकृतेरसंमतस्य ॥ २८ ॥

शिबिकामधिरुह्य जातु गच्छ-
न्स महर्षीन्विनियुज्य तत्र धुर्यान् ।
असकृन्निजगाद सर्प सर्पे-
त्यपि तं कुम्भभवस्तथा भवेति ॥ २९ ॥

अशनिर्ह्यसमाप्त एव भोगे
पतितो मूर्धनि तस्य शापरूपः ।
अत एव पतन्नपि क्षमायां
नहुषो न त्यजति स्म भोगिभावम् ॥ ३० ॥

चिरलुप्तकथे मघोनि तस्मि-
न्नपि तस्य प्रतिरूपके प्रणष्टे ।
अधिगन्तुमनाः प्रवृत्तिमैन्द्रीं
युयुजे योगदृशा गुरुः सुराणाम् ॥ ३१ ॥

सरसीरुहनालतन्तुलीनं
सरसि क्वापि समेत्य योगगूढः ।
प्रतिबोधयति स्म देशिक-
स्तं करणीयं करुणाप्लुतैर्वचोभिः ॥ ३२ ॥

चकितः समयं कियन्तमस्मि-
न्सरसि स्थास्यसि खेदयन्नमर्त्यान् ।
न हि सम्यगनिष्कृतं तदेनः
प्रलये प्राकृतिकेऽपि मुञ्चति त्वाम् ॥ ३३ ॥

सकलाघनिबर्हणे समाधौ
वसतस्तस्य वधे तु कः समाधिः ।
चरणं परिहृत्य चन्द्रमौलेः
शरणं संसरतां यदाविरिञ्चात् ॥ ३४ ॥

चर पाशुपतव्रतं चरन्स-
वनावायतनानि शांभवानि ।
अनुयास्यति केवलं न तु त्वा-
मधिकुर्वीत शिवाज्ञया तदेनः ॥ ३५ ॥

विशतस्तव यत्र संप्रसीद-
त्यमृतेनेव विशोधितोऽन्तरात्मा ।
करुणावरुणालयो महेशः
कलुषं तत्र निवारयिष्यतीति ॥ ३६ ॥

स तथेत्यभिनन्द्य शासनं त-
त्कलितस्वस्त्ययनश्च देशिकेन ।
अधिरुह्य सुरद्विपं प्रतस्थे
विविधान्यायतनानि विश्वमूर्तेः ॥ ३७ ॥

स गिरीन्हिमशैलमन्दरादी-
न्सरितो जह्नुसुताकलिन्दजाद्याः ।
विपिनानि च नैमिशादिमानि
व्यचरत्पाशुपतव्रती महेन्द्रः ॥ ३८ ॥

स तपोवनदर्शमध्युवास
प्रयतः सन्निममज्ज तीर्थदर्शम् ।
द्विजवेदमतर्पयद्धनौघै-
र्व्रतवेदं नियतः समाचचार ॥ ३९ ॥

त्रिविधान्यपि शांभवानि लिङ्गा-
न्ययजद्वस्तुभिरान्तरैश्च बाह्यैः ।
लभते स्म न शान्तिमात्मनोऽयं
क्वचिदप्येषु कुतो हि पातकस्य ॥ ४० ॥

स तपांसि बहूनि तप्यमानः
कलुषेणानुयतानुतप्यमानः ।
भवबन्धनिराकरिष्णुशाखा-
पवनं नीपवनं समाससाद ॥ ४१ ॥

उपहारमनुत्तमं पुरारे-
रवतंसोत्पलसौरभं हरन्तः ।
अभिजग्मुरिवानिलास्तदीया
अतिथिं स्वामिनमागतं चिराय ॥ ४२ ॥

स कदम्बवनीपरागलेशैः
शिवगङ्गोदकशीकरानुविद्धैः ।
पवनोपहृतैः पतिः सुराणां
परमां कामपि निर्वृतिं जगाहे ॥ ४३ ॥

प्रससाद मनः प्रसेदुरक्षी-
ण्युपजज्ञे बलमुद्बभूव शौर्यम् ।
स हि संनिचकर्ष यावदित्थं
कलुषं विप्रचकर्ष तावदस्य ॥ ४४ ॥

अतिहृष्टमनाः स तैर्निमित्तै-
रनुसंधाय गिरं पुरोधसस्ताम् ।
परिनिश्चिनुते स्म तत्रिलोक्यां
परमं धाम हरिः परस्य धाम्नः ॥ ४५ ॥

सकलाद्भुतधाम्नि सीम्नि तस्यां
सहसैवायमवाप्तुतो गजेन्द्रात् ।
प्रयतः प्रविवेश काननं त-
त्सह सर्वैश्च विना तदेकमेनः ॥ ४६ ॥

स ददर्श फणातपत्रगुप्ता-
न्नकुलानातपतापितानहीनाम् ।
अपि दृप्तचरत्तरक्षुदंष्ट्रा-
मुखकण्डूयितलोचनां कुरङ्गीम् ॥ ४७ ॥

स लतां कमपि द्रुमं प्रपन्नां
सविधस्थान्यतरूपगूहभीत्या ।
प्रतिसंहृतपल्लवामपश्य-
त्परिकृष्टामपि कौतुकात्किरातैः ॥ ४८ ॥

उपहृत्य चलद्रुमप्रवाला-
न्कदलीरिक्षुलता मृणालिनीश्च ।
नमतः शतशो हरेः समक्षं
न विषेहे वनकुञ्जरान्सुरेभः ॥ ४९ ॥

पथि वीक्षितवद्भिरादरेण
प्रमथैः पाशुपतैर्महर्षिभिश्च ।
सविधं तपसातिनिर्मलोऽयं
समुपानीयत सुन्दरेश्वरस्य ॥ ५० ॥

अविचिन्त्यमदृष्टमश्रुतं च
त्रिषु लोकेष्वपि दिव्यलिङ्गमेतत् ।
विकचैर्नयनोत्पलैर्विडौजा
विचकार प्रथमोपहारहेतोः ॥ ५१ ॥

प्रमदाश्रुपरिप्लुतैस्तदानीं
नयनैराचरणाग्रमाललाटम् ।
द्रवतां प्रतिपद्य भक्तियोगा-
द्दृशे वारिमयीव तस्य मूर्तिः ॥ ५२ ॥

अथ दण्डवदानतस्य शंभौ
ददृशे दृष्टिमयी तनुर्मघोनः ।
उपहारकृते पुरो विकीर्णा
विकचेन्दीवरमालिकेव दिव्या ॥ ५३ ॥

सगणं सवृषं सनन्दिकेशं
ससुतं साम्बमपि प्रभुं तमाद्यम् ।
परिपूजयितुं चकाङ्क्ष शक्रो
महतामेव मनोरथोऽपि तावान् ॥ ५४ ॥

स्मृतसंनिहितोऽथ विश्वकर्मा
सह दिव्येन पुरोधसा तदानीम् ।
शिरसा प्रतिगृह्य भर्तुराज्ञा-
मयतिष्ठायतनाय चन्द्रमौलेः ॥ ५५ ॥

विधृतं करिभिर्विमानरूपं
विपुलं प्राक्प्रतिहारमेकभूमम् ।
शिखरोल्लिखिताम्बरं स शिल्पी
विदधे गर्भगृहं शुभे विलग्ने ॥ ५६ ॥

अतिसुन्दरमर्धमण्डपं च
प्रतिहारत्रयभावितान्तरेण ।
महता मणिमण्डपेन सक्तं
विदधे विश्वशुभाय विश्वकर्मा ॥ ५७ ॥

प्रतिमाः परिवारदेवतानां
विविधान्यायतनानि तत्र तासाम् ।
परितः परितोऽपि पञ्च साला-
नकरोदुन्नतगोपुरोपगूढान् ॥ ५८ ॥

शुभवास्तुनि शूलपुष्करिण्या
रुचिरे रोधसि पश्चिमे स शिल्पी ।
भवनं मणिचित्रितं भवान्या
गणनाथस्य च कल्पयांबभूव ॥ ५९ ॥

अपरानपि मण्डपप्रभेदा-
नभितश्चोत्सववीथिका विशालाः ।
असृजत्स मरुत्वतोऽनुरूपा-
न्प्रभुताभक्तिविवेकपाटवानाम् ॥ ६० ॥

प्रहसद्वदनं प्रसन्ननेत्रं
द्विभुजं दक्षिणतो धृतोत्पलं च ।
करकोपलवद्द्रुनीभवन्त्या
दययेवाकृत विग्रहं स देव्याः ॥ ६१ ॥

अधिकानि ममेत्यहर्निशं यै-
र्मघवा शोचति लोचनैः समन्तात् ।
अवलोक्य स विश्वकर्मकर्मा-
ण्यलमेतानि किमित्यशोचदेभिः ॥ ६२ ॥

दयितस्य दिदृक्षतेऽपसव्यं
वपुरेषा किल वामभागगेति ।
कृतमिङ्गितवेदिना मघोना
पदमस्याः किमु दक्षिणेन शंभुम् ॥ ६३ ॥

अतिचारुमशेषलक्षणाढ्यं
ललितं बिम्बमिमं स्वतो विवक्षुम् ।
हरिरर्थयते स्म शक्तिमाद्यां
गुरुरावाहयदन्वमंस्त शंभुः ॥ ६४ ॥

अखिलं जगदात्मसंप्रसूतं
परिपुष्णाति दृगेव यत्किलास्याः ।
अभिधामपि मीनलोचनेति
व्यदधादिन्द्रपुरोहितस्ततोऽस्याः ॥ ६५ ॥

नियतां कनकारविन्दपूजां
दिविजैः कर्तुमना हरिः सरोजैः ।
पवनं प्रजिघाय देवदूतं
स्वयमस्त्रादथ शूलपुष्करिण्याम् ॥ ६६ ॥

कृतनित्यविधौ विलम्बमाने
शिवमभ्यर्चयितुं क्षणं सुरेशे ।
कमलैरुदभावि जातरूपैः
कमलिन्यामतिसौरभैरमुष्याम् ॥ ६७ ॥

स्वयमाहरदर्चनाय शंभोः
सुरभीण्यम्बुरुहाणि काञ्चनानि ।
कनकाम्बुजिनीति नाम तस्याः
कलयन्विस्मित एष सस्मितश्च ॥ ६८ ॥

क नु काञ्चनता क सौरभं त-
द्दिवि संकल्पभवेषु पङ्कजेषु ।
प्रभवत्यखिलं हि निर्जराणां
ध्रुवमाध्यासिकतत्तदर्थवन्नः ॥ ६९ ॥

सलिलैरतिपावनैस्तदीयैः
कमलैरप्यतिसौरभैर्महेन्द्रः ।
परिपूज्य शिवौ गुरूक्तरीत्या
प्रणिपातैः परितोषयांबभूव ॥ ७० ॥

अपि गद्गदया प्रमोदबाष्पै-
रपि सारोज्झितयातिसंभ्रमेण ।
पितरौ प्रियकप्रियौ सुरेशः
स गिरानर्च वचःपथव्यतीतौ ॥ ७१ ॥

भुवि सुन्दरमास्पदं तवैत-
च्छिवलिङ्गं तु ततोऽपि सुन्दरं ते ।
अपि सुन्दरमेव सुन्दराणा-
मभिधानं वचनामृतं त्वदीयम् ॥ ७२ ॥

समसेविषि मन्दरे हिमाद्रौ
कलधौताचलकन्दरेऽपि च त्वाम् ।
विदितं तु परं न विश्वपारं
किमु तत्रैवमसीति कापि शङ्का ॥ ७३ ॥

न मखैर्न जपैर्न होमदानै-
र्न तपोभिर्विविधैश्च लभ्यते यत् ।
तदिदं तव संनिधानभाग्यं
तरुभिः कैरपि भुज्यते निरीहैः ॥ ७४ ॥

निहता दनुजा जिता त्रिलोकी
त्रिदिवे चाधिकृतं ततः किमासीत् ।
इह ये मृगपक्षिणो न हीमा-
नपि नीराज्य विमोक्तुमर्हता मे ॥ ७५ ॥

अपवृज्य किमीश साधयेयं
भवदानन्दमवाप्नुयां तदाहम् ।
किमितोऽप्यधिकः स यो ममासा-
वुचितः स्वाम्युपलम्भजः प्रमोदः ॥ ७६ ॥

जडमेव जगत्तव स्वमासी-
दजडाः केचन मादृशोऽपि जीवाः ।
अतिवाङ्मनसं भवन्तमेव
प्रतिपन्नास्तु वयं प्रशासितारम् ॥ ७७ ॥

वचनावसरो न लभ्यते न-
स्त्वयि मीनाक्षि शिवाविनाकृतायाम् ।
इति देवि पृथक्कृतासि किंचि-
त्तमिमं मा कुरु मानसेऽपराधम् ॥ ७८ ॥

गिरिराजकुमारिकामपि स्वं
विपिनेष्वद्रिषु चानुवर्तमानाम् ।
भवतीं प्रियकप्रियेऽनुरोद्धुं
स्वयमध्यास्त शिवः कदम्बमूलम् ॥ ७९ ॥

जगतो जगदीश्वरस्य च श्री-
भवती यद्यपि सर्वतोऽस्ति पूर्णा ।
करुणामयमुत्सहे न हातुं
तव मीनाक्षि तथापि रूपमेतत् ॥ ८० ॥

हरयस्त इमे महावनेऽस्मि-
न्नयमिन्द्रद्रुरसावपीन्द्रवल्ली ।
मम नामजुषः स्थिता यदेते
मम सेवेयमिति प्रतीच्छ मातः ॥ ८१ ॥

कति सन्तु न वेधसः कतीन्द्रा-
स्तव मीनाक्षि तरङ्गितैरपाङ्गैः ।
किमधश्च्यवते मया विना द्यौः
कृपणं मां घटयस्व किङ्करेषु ॥ ८२ ॥

व्यगलद्दनुजेषु मत्सरो मे
विरराम त्रिदिवोपभोगरागः ।
स्थगिता बहिरेव वृत्रहत्या
भवतोरद्य मयि प्रसादलेशात् ॥ ८३ ॥

इति तं प्रणिपत्य संस्तुवन्तं
प्रथमं भक्तिमतां पतिं सुराणाम् ।
अनुगृह्य दयोर्मिलैरपाङ्गै-
रगदिष्टामिदमादिमौ युवानौ ॥ ८४ ॥

आद्यस्त्वमेषामसि पार्षदानां
कुमारयोश्चास्यनयोस्तृतीयः ।
जानीवहे ते परमां च भक्तिं
विद्राविता सा तव वृत्रहत्या ॥ ८५ ॥

वासन्तिकप्रथमपर्वसु वासव त्व-
मित्थं समेत्य सकलैरनुयायिवर्गैः ।
आविश्वपारनगराभिमुखात्प्रयाणा-
दभ्यर्च नौ कनकवारिरुहैरमीभिः ॥ ८६ ॥

इत्युक्ते सति जगदादिदंपतिभ्या-
मिन्द्रस्तद्गुरुरितरेऽनुयायिनश्च ।
प्रस्थानप्रणतिपरम्पराभिरेता-
वन्योन्याभ्यधिकदयामयौ वितेनुः ॥ ८७ ॥

आमन्त्र्य द्विरदेन्द्रवक्त्रमसकृत्संप्रार्थ्य नन्दीश्वरं
संमान्य प्रमथान्निवेद्य सकलं चण्डेश्वरं शांभवम् ।
आशीर्भिः प्रतिनन्दितौ मुनिगणैरापृच्छ्य वाचस्पतिं
दिव्येन द्विरदेन निर्मलतरो देवः प्रतस्थे पुरीम् ॥८८॥

इति तृतीयः सर्गः ॥



# चतुर्थः सर्गः ॥

निवृत्ते वासवे तस्मिन्निवृत्ते चान्तरे मनोः ।
इन्द्रांचकार कोऽप्यन्यो बृन्दारकनिकेतने ॥ १ ॥

अभ्रमातङ्गमारुह्य विभ्रमादमरेश्वरः ।
संवृतः सकलैर्देवैर्निर्जगाम पुराद्बहिः ॥ २ ॥

सर्वासामपि सिद्धीनां दुर्वासा निधिरद्भुतः ।
समगच्छत तेनाभ्रे स हि गच्छन्यदृच्छया ॥ ३ ॥

परिपालयितुं रौद्रीं प्रतिसर्गाधिकारिताम् ।
तस्य न ज्वलति क्रोधो यस्यैका जगदाहुतिः ॥ ४ ॥

अग्न्यगारगते तस्मिन्ननाहूतागताः स्वयम् ।
संदर्शयन्ति स्वात्मानं देवा आवाहनक्षणे ॥ ५ ॥

नानुगच्छति तस्याग्निर्न विष्यन्दयते हविः ।
नापक्षयति सन्त्रस्तो न निर्मन्थे विलम्बते ॥ ६ ॥

अतपत्तपनाकारमज्वलज्ज्वलनोपमम् ।
दृष्ट्वैव तं मुनिं देवास्तत्रसुस्तत्र सुस्थिताः ॥ ७ ॥

पाणिभ्यामप्रमत्तोऽसौ प्रसादं पद्ममैश्वरम् ।
गजस्कन्धगतायापि ददौ राजेति वज्रिणे ॥ ८ ॥

अनादृत्य स तं मोहान्निदधे मूर्ध्नि दन्तिनः ।
शुण्डया सोऽप्युपादाय निष्पिपेष निसर्गतः ॥ ९ ॥

आभुज्य स भ्रुवौ किंचिदावर्त्य कपिले दृशौ ।
प्रजज्वालेव कोपेन मुनिः प्रस्फुरिताधरः ॥ १० ॥

पस्पन्दे न सहस्रांशुस्तस्तम्भे मारुतस्तदा ।
चकम्पे सार्णवा पृथ्वी विव्यथे केवलं नभः ॥ ११ ॥

स हस्तिहस्तिपकयोः शापं घोरमवासृजत् ।
वज्रं वज्रिणि दुर्वारमङ्कुशं च निरङ्कुशे ॥ १२ ॥

मौलिं भेत्स्यति पाण्ड्योऽस्य मदान्धस्य दिवस्पतेः ।
संचरत्ववनावेष कुञ्जरः क्षुद्रदन्तिवत् ॥ १३ ॥

दत्तशापतया किंचिद्दग्धेन्धनमिवानलम् ।
प्रशाम्यन्तममुं देवाः प्रणिपातैरसान्त्वयन् ॥ १४ ॥

संभ्रमोद्वेगकार्पण्यस्तम्भप्रणतिसान्त्वनैः ।
प्रसादाभिमुखस्तेषां प्राह माहेश्वरो मुनिः ॥ १५ ॥

पाण्ड्यो भिनत्तु तर्ह्यस्य मौलिं मकुटलक्षणम् ।
सुन्दरेशार्चनान्तश्च शापः स्वर्दन्तिनोऽस्त्विति ॥ १६ ॥

महेन्द्रसविधावासवासनारसिकश्चिरात् ।
महेन्द्र एव शैलेन्द्रे जन्म लेभे सुरद्विपः ॥ १७ ॥

आमूलमग्नदन्तः स खेलासु बिभिदे भुवम् ।
धर्तुकाम इव स्कन्धे तामेवोद्धृत्य सार्णवाम् ॥ १८ ॥

मदगन्धेन धावन्ति येषामन्ये मतङ्गजाः ।
कर्णानिलेन ते तस्य कलभस्यापि दुद्रुवुः ॥ १९ ॥

स सिंहान्शुण्डयादाय चिक्षेप तृणपूलवत् ।
पादैरेव महाग्राहान्भेकमर्दं ममर्द च ॥ २० ॥

ग्राहा ग्रसन्ते हर्यक्षा घ्नन्ति गृह्णन्ति मानवाः ।
इत्युच्यमानं कलभैराश्चर्यमिव सोऽश्रृणोत् ॥ २१ ॥

सरित्सरांसि पीतानि सकृदाकृष्य शुण्डया ।
मदधारापदेशेन मन्ये तस्य प्रसुस्रुवुः ॥ २२ ॥

स मत्तः संचरन्पृथ्वीं चरणैरपचस्करे ।
लघूकरिष्यन्निव तां दिग्गजानुजिघृक्षया ॥ २३ ॥

अजानिव गजानन्यानादायादाय चिक्षिपे ।
स एव पुंगजस्तत्र वशास्तस्याभवन्परे ॥ २४ ॥

स खेलन्सागरस्याम्भः क्षिपन्मन्दाकिनीं प्रति ।
दयया चिरविश्लिष्टौ दंपती तावयोजयत् ॥ २५ ॥

पश्यन्मध्यमलोकस्य रामणीयकमद्भुतम् ।
पांसुभिः स करोद्धूतैश्चकारेव दिवं भुवम् ॥ २६ ॥

विद्रवद्भिर्वने तस्मिन्व्याधव्याघ्रमृगाधिपैः ।
मृगाणां रक्षणादासीन्मृगेन्द्रः सोऽद्भुतः क्षितौ ॥ २७ ॥

महेन्द्रादेष मलयं मलयादपि दर्दरम् ।
संचरञ्जातुचित्प्राप कुञ्जरो नीपकाननम् ॥ २८ ॥

मदगन्धाशया प्राप्तैर्मधुपैर्विपिनात्ततः ।
संप्रदर्शितवर्त्मेव स ययौ हेमपद्मिनीम् ॥ २९ ॥

गणेशमदनिष्यन्दगन्धसर्वस्ववेदिनः ।
उपेक्षां भ्रमराश्चक्रुरुन्मदास्तन्मदाम्भसि ॥ ३० ॥

स पतन्नेव सरसि क्षीरोद इव मन्दरः ।
कल्लोलैः प्लावयामास कदम्बविपिनान्तरम् ॥ ३१ ॥

मलिनो निर्ममज्जास्मिन्नुन्ममज्जाथ निर्मलः ।
प्रागभूत्केवलो भौमः सार्वभौमोऽथ दन्तिनाम् ॥ ३२ ॥

उत्तीर्य बहिरन्तश्च नीरजा नीरजाकरात् ।
अतीयाय स तं शापमधीयाय मुनेर्गिरः ॥ ३३ ॥

गाङ्गेयैः शैवगाङ्गेयैः कमलैः कमलास्पदैः ।
एकदन्तं चतुर्दन्तः सिन्धुरं सिन्धुरोऽर्चयत् ॥ ३४ ॥

पुष्करैरभिषिच्येशौ पुष्करोपहृतैरयम् ।
पुष्करैरेव चानर्च पुष्करं गाहितुं पुनः ॥ ३५ ॥

सितं हि काञ्चनं पुष्पं शिवस्यैवाभवन्मुदे ।
पिशङ्गं तु तदानीतं प्रीतये शिवयोरभूत् ॥ ३६ ॥

मुक्तशापो गजः पृथ्वीं मुदा यदपचस्करे ।
गजतीर्थमिति ख्यातं तद्बभूव महत्सरः ॥ ३७ ॥

ऐरावतेश्वरं लिङ्गमैरावतविनायकम् ।
स तीरे सरसस्तस्य स्थापयित्वाभ्यपूजयत् ॥ ३८ ॥

पुरंदरेश्वरं नाम पूर्वतः सुन्दरेशितुः ।
स्वामिनामाङ्कितं लिङ्गं स्थापयामास चापरम् ॥ ३९ ॥

प्रहितः सुन्दरेशेन स हि तत्र चिरं वसन् ।
पुनर्जगाम स्वं धाम पुरुहूतेन चाहृतः ॥ ४० ॥

कदम्बविपिनात्प्राचि कल्याणनगरे ततः ।
कालेन महता जज्ञे कश्चिद्वैश्यो धनंजयः ॥ ४१ ॥

अस्त्राय गत्वा देवेन कृतयुद्धं गतस्पृहः ।
कौरव्यमत्यशेतायमूरव्यस्तु धनंजयः ॥ ४२ ॥

तस्य भूमिस्पृशो भक्तिं तरुणेन्दुशिखामणौ ।
भक्तिरागन्तुकान्येषां कथं वानुकरिष्यति ॥ ४३ ॥

दशैकादशिकाः प्रायो वणिजश्चतुरा अपि ।
एकं दत्वेह सोऽमुत्र तत्सहस्रमुपार्जयत् ॥ ४४ ॥

परक्षेत्रपरामर्शपरिशङ्की धनंजयः ।
नोत्ससर्ज बहिर्जातु स गोषङ्गवमात्मनः ॥ ४५ ॥

वृत्तिः सा हि विशां यत्तु भुवमुल्लिख्य जीवनम् ।
स तु तत्कर्म तत्याज दिवमुल्लिख्य केवलम् ॥ ४६ ॥

अक्रीणीतैव पुण्यानि व्यक्रीणीत न जात्वपि ।
समयेषूपयोगाय संगृह्यैव जुगोप सः ॥ ४७ ॥

स बहून्विषयान्गत्वा वाणिज्याय धनंजयः ।
निवृत्तो नीपकान्तारसमीपं सायमाययौ ॥ ४८ ॥

अदृश्यत सहस्रांशुरस्तभूधरमस्तके ।
मन्देहयुद्धलब्धासृक्पङ्कदिग्ध इवारुणः ॥ ४९ ॥

अर्कमस्तं गमिष्यन्तमवेत्यानुचराः कराः ।
अन्वगन्वगलम्बन्त दुद्रुवुर्ये पुरः पुरः ॥ ५० ॥

निन्दन्तो रजनीं कोका नन्दन्तस्तां चकोरिकाः ।
चञ्चूचञ्चवि सायाह्ने सर्वतः संप्रजह्रिरे ॥ ५१ ॥

प्रचुक्रुशुर्द्विजाः केचिदपरे मौनमास्थिताः ।
असंघातो द्विजानामित्यासीत्तथ्यं तदा वचः ॥ ५२ ॥

प्रतीच्यां ददृशे रागः स स्थास्यति कियच्चिरम् ।
प्राच्यां दृष्टचरो ह्येष भास्वतो भ्राम्यतः सदा ॥ ५३ ॥

प्रणष्टे महसां राशौ प्रादुर्भूतं हि तारकैः ।
तमसाभ्यावृते लोके तावद्भिरपि किं कृतम् ॥ ५४ ॥

त एव भानवो भानोस्तारकावपुषा स्थिताः ।
तथाप्येकः स नास्तीति तमांसि विजजृम्भिरे ॥ ५५ ॥

प्रायो जात्यनुरोधाय पद्ममात्रे निमीलति ।
भानुहस्तगतेनापि पङ्कजेन निमीलितम् ॥ ५६ ॥

तथा सान्द्रीभवन्ति स्म तमांसि हरितां मुखे ।
व्याप्नुवन्ति हि तान्येव विहन्यन्ते यथा मिथः ॥ ५७ ॥

शैवलोत्पलभृङ्गाणां सरसीषु निशामुखे ।
स्पर्शसौरभकूजाभिः स्वं स्वं रूपमबुध्यत ॥ ५८ ॥

निष्पपातेव गगनं निःससारेव सागरः ।
आववारेव निःशेषमविद्या महती तदा ॥ ५९ ॥

अयःशृङ्खलवत्क्रष्टुमाहर्तुं तृणपूलवत् ।
आश्यानपङ्कवच्छेत्तुमासीच्छक्यं तदा तमः ॥ ६० ॥

अनिस्तार्येण मनसाप्यनाव्येनातिरंहसा ।
स्रोतसेवान्धकारस्य स निन्ये नीपकाननम् ॥ ६१ ॥

सोमवारोपवासेन सोऽध्वखेदेन तावता ।
विप्रयोगेण सार्थाच्च विव्यथे केवलं तदा ॥ ६२ ॥

नोन्नतानि न निम्नानि न मृगा न च पादपाः ।
सर्वमेकमभात्तस्य सांनिध्यादिव शांभवात् ॥ ६३ ॥

अश्रौषीदश्रुतचरममृतस्येव निर्झरम् ।
गानमातोद्यसंभिन्नं गन्धर्वाणामदूरतः ॥ ६४ ॥

स तच्छब्दानुसारेण संप्रसर्पञ्शनैःशनैः ।
दयया देवदेवस्य दिव्यं चक्षुरधारयत् ॥ ६५ ॥

स दिव्यलिङ्गमभितः संददर्श सुरानृषीन् ।
ध्यायतो गायतः सामान्यर्चतश्चाभिषिञ्चतः ॥ ६६ ॥

ननृतुः प्रमथाः कापि जगुः सामानि सामगाः ।
ननृतुर्देवसुदृशो जगुरन्यत्र किन्नराः ॥ ६७ ॥

कमलैः कनकाब्जिन्या विमलैरुभयैरपि ।
स सुरैः सार्धमानर्च शर्वाणीचन्द्रशेखरौ ॥ ६८ ॥

प्रभान्त्यामथ शर्वर्यां प्रवृत्ते जनचङ्क्रमे ।
स यत्रैक्षिष्ट देवर्षीस्तत्रैक्षिष्ट तरून्मृगान् ॥ ६९ ॥

स तु तेनाद्भुतेनैव निर्वृत्तामृतपारणः ।
व्रताङ्गं पारणां कर्तुं प्राप नेदीयसीं पुरीम् ॥ ७० ॥

द्रमिडान्वयमूर्धन्यो द्वितीय इव वासवः ।
प्रशशास महीं यत्र पार्थिवः कुलशेखरः ॥ ७१ ॥

संगम्य बन्धुभिः सार्धं विश्रम्य च यथासुखम् ।
वृत्तं विज्ञापयामास राज्ञे सर्वं स्वमद्भुतम् ॥ ७२ ॥

स जातु पुरुषं कंचिच्चन्द्रचूडजटाधरम् ।
निद्राणोऽन्तर्दशाद्राक्षीन्नृपतिः कुलशेखरः ॥ ७३ ॥

नन्वस्ति नगरादस्मात्पश्चिमं नीपकाननम् ।
वन्यैर्मृगगणैः सार्धं वसामोऽत्र वयं चिरम् ॥ ७४ ॥

तद्वनं नगरीकृत्य तदेवाधिवसन्स्वयम् ।
कुलमुद्धृत्य वत्स त्वं कुरु नामेदमर्थवत् ॥ ७५ ॥

इत्युक्त्वान्तर्हिते तस्मिन्निन्दुचूडे दयानिधौ ।
प्रत्यबुध्यत संहृष्टः प्रत्यूषे कुलशेखरः ॥ ७६ ॥

अद्भुतं स्वप्नवृत्तान्तमाप्तेषु च महत्सु च ।
आवेदयन्नृपः प्रातरभ्यनन्द्यत तैरपि ॥ ७७ ॥

निश्चित्यानुग्रहं शंभोर्निर्मित्सुर्विपिनं पुरम् ।
संप्रतस्थे महीपालः सावरोधः सबान्धवः ॥ ७८ ॥

प्रस्थितस्याग्रतो वामं प्रवृत्तस्तस्य खञ्जनः ।
कटाक्ष इव मीनाक्ष्याः कलयन्भावि मङ्गलम् ॥ ७९ ॥

स कदम्बवनं प्राप्य संददर्श महाद्भुतम् ।
हैमप्राकारसंबाधमैन्द्रं धाम महेशितुः ॥ ८० ॥

स दृष्ट्वा साम्बमीशानं संप्रार्थ्य च गणाधिपम् ।
न्ययुङ्क्त शिल्पिनो दक्षान्निर्मित्सुर्नगरं नृपः ॥ ८१ ॥

सर्वे ते विश्वकर्माणः सर्वे कुशलतामयाः ।
समेत्य मन्त्रयांचक्रुः शिल्पिनः पुरकर्मणि ॥ ८२ ॥

स्वस्तिकं सर्वतोभद्रं मण्डलं दीर्घवृत्तकम् ।
निर्मित्समाना नगरं ते विप्रावादिषुर्मिथः ॥ ८३ ॥

शिल्पिष्वेक इवागत्य सिद्धः स्वप्नेक्षितः पुरा ।
इतिकर्तव्यतां तेषामुपादिक्षत्प्रभोः पुरः ॥ ८४ ॥

स्वप्नदर्शनसंवादि तद्रूपं तस्य चिन्तयन् ।
यावद्ददर्श नृपतिस्तावदन्तरधत्त सः ॥ ८५ ॥

पश्यन्ननुग्रहं शंभोः स्वप्नजागरयोः समम् ।
उदसोढ स भूयोऽपि पार्थिवः पुरकर्मणि ॥ ८६ ॥

अपि तद्विपिनं सान्द्रमज्ञातालोकसङ्कथम् ।
शासनात्पाण्ड्यनृपतेर्जातं जाङ्गलवत्क्षणात् ॥ ८७ ॥

तपनेन्दुकरालीढे तस्मिन्दिष्ट्या वनोदरे ।
ब्रह्मचर्यं जहुश्चक्रा दुर्भिक्षं च चकोरिकाः ॥ ८८ ॥

चरन्तो जन्तवो यत्र जाता वनचराः पुरा ।
तदेवासीद्वनचरं तत्क्षणं तस्य शासनात् ॥ ८९ ॥

षण्णामप्यध्वनामन्ते शाश्वतं पदमैश्वरम् ।
इति श्रुत्वैव सिद्धान्तमध्वान्तं तदयं व्यधात् ॥ ९० ॥

अप्यान्तरतमो हर्तुर्बाह्ये तमसि का क्षमा ।
लाभोऽयं यच्छिवादारादियन्तं कालमास्त तत् ॥ ९१ ॥

घातंघातमिह व्याघ्रान्ग्राहंग्राहं शुभास्त्वचः ।
अहरन्वस्त्रदुर्भिक्षं किङ्करास्तस्य शाङ्करम् ॥ ९२ ॥

संवर्ते तत्र सत्त्वानां समगृह्यन्त कुञ्जराः ।
सर्व एव शुभः कालः स्वरूपं यदि सुन्दरम् ॥ ९३ ॥

सालमभ्रंकषं चक्रुः सालांश्छित्त्वा सहस्रशः ।
किं साध्यं बहुभिः क्षुद्रैर्वरमेको महोच्छ्रितः ॥ ९४ ॥

वप्रक्रियासु निर्मग्नैर्दन्तैरमरदन्तिनाम् ।
शृङ्गेषु तस्य सालस्य गवाक्षाणि वितेनिरे ॥ ९५ ॥

परिखां खनतस्तत्र प्रविष्टानारसातलम् ।
के यूयं सागराणामित्यन्वयुञ्जत पन्नगाः ॥ ९६ ॥

परिखारन्ध्रतस्तत्र पातालाज्जाह्नवीजलम् ।
जलयन्त्रादिवोत्तस्थौ भूम्यन्तं भूतलाच्च्युतम् ॥ ९७ ॥

भगिनीं भगिनीशं च द्रष्टुं प्राकारकैतवात् ।
उन्ममज्जेव मैनाकः परिखासागरात्ततः ॥ ९८ ॥

राजसिंहैर्नरव्याघ्रैः पूरितं भटकुञ्जरैः ।
पुरं यथापुरं जज्ञे का तस्यान्योपमा भवेत् ॥ ९९ ॥

छिन्दद्भिस्तद्वनं तत्र शेषितं यत्कचित्कचित् ।
तान्येव तस्योद्यानानि सर्वतः प्रचकाशिरे ॥ १०० ॥

वीथिका उत्सवार्था या विहिता विश्वकर्मणा ।
चतुर्णामपि वर्णानां ता एवासन्पृथक्पृथक् ॥ १०१ ॥

पाण्डरैर्भवनैः पूर्णे प्राकारे धाम शांभवम् ।
मध्येमौक्तिकताटङ्कं रेजे रत्नमिवार्पितम् ॥ १०२ ॥

दिशि चोत्तरपूर्वस्यां देवदेवस्य मन्दिरात् ।
निर्मलं भवनं राज्ञो निर्ममुस्तत्र शिल्पिनः ॥ १०३ ॥

प्रासादः शुशुभे तत्र भवने धरणीपतेः ।
भक्त्या महेशितुर्वृद्धः प्रसाद इव निर्मलः ॥ १०४ ॥

दिव्यैः सुधामयैर्मेघैर्देवो जीमूतवाहनः ।
नगरं सेचयामास नवीनं त्रीण्यहानि सः ॥ १०५ ॥

मधुरोदकसंसिक्ता मधुरेयं महापुरी ।
इत्यश्रूयत तत्रत्यैर्दिव्या वागशरीरिणी ॥ १०६ ॥

दुर्गागणेशवटुकेश्वरमातृवर्गै-
रध्यासितां सुविहितेषु निजास्पदेषु ।
सद्यः प्रवर्तितमहेशमहोत्सवान्ते
पाण्ड्यो विवशे नगरीं मधुरां प्रहृष्टः ॥ १०७ ॥

अर्थैरर्थिजनाच्छ्रुतैः श्रुतवतः संमाननैर्बान्धवा-
न्सेवाभिर्महतो निसर्गकरुणावत्या स भृत्यान्दृशा ।
आत्मानात्मविवेकतो गिरिशमप्याराधयन्मेदिनीं
भूपालः कुलशेखरोऽत्र बुभुजे सप्तार्णवीवेष्टिताम् ॥

इति चतुर्थः सर्गः ॥

## पञ्चमः सर्गः ॥

---

स इत्थमाराधितचन्द्रशेखर-
प्रसादसंपत्परिपाकसंभृतम् ।
कुलावतंसं कुलशेखरो नृप-
श्चिराय लेभे मलयध्वजं सुतम् ॥ १ ॥

स पांसुकेलीष्वपि शंकरालया-
न्प्रकल्पयन्ब्रह्मपुरीश्च सर्वतः ।
प्रपञ्चमातामहतापदोचितं
नरेन्द्रसूनुर्व्यहरन्महाशयः ॥ २ ॥

अथोपनीतोऽधिजगे नृपात्मज-
स्त्रयीं मुनेः कुम्भभवात्पुरोधसः ।
समं महास्त्रैर्धनुरागमं पितुः
स्वतश्च भक्तिं शिवयोरचञ्चलाम् ॥ ३ ॥

अशेषविद्यानिधिमात्तयौवनं
    कुमारमेनं कुलशेखरो नृपः ।
युयोज दारक्रियया कुलार्हया
    श्रियेव धर्मं क्षमयेव विक्रमम् ॥ ४ ॥

नृपस्य काञ्चीपुरनेतुरात्मजा
    महाशया काञ्चनमालिकाभिधा ।
नरेन्द्रसूनोर्गृहिणीषु वल्लभा
    बभूव तारास्विव रोहिणी विधोः ॥ ५ ॥

पुरा हि विश्वावसुनामशालिनो
    बभूव गन्धर्वपतेरियं सुता ।
प्रसाद्य गौरीं जगदेकमातरं
    ममैधि कन्येत्यवृणीत या वरम् ॥ ६ ॥

सुशीलतां सुन्दरतामिवोज्ज्वलां
    दयार्द्रतां भृत्यजनेषु ते इव ।
दधे पुनस्ता इव भक्तिमीश्वरे
    मनस्विनी काञ्चनमालिका तदा ॥ ७ ॥

सुतानिव स्वान्परिपुष्णती जना-
न्सभाजयन्ती श्वशुरौ शिवाविव ।
पतिं तु पूर्वेद्युरिवापरेद्युर-
प्युपाचरद्दैवतजीविताधिकम् ॥ ८ ॥

पतिव्रता धर्मपथप्रवर्तिका
सती च भर्तुर्वपुरर्धमेव सा ।
शरीरमात्मा हृदयं च जीवितं
दृशौ च जज्ञे दयितस्य सा पुनः ॥ ९ ॥

महत्सु कार्येष्वमहत्सु वा ययोः
कदापि वैमत्यकथापि नाभवत् ।
अभूत्तयोरेव मिथोऽनुरागिणो-
रनङ्गमूलः कलहः स केवलम् ॥ १० ॥

स युक्तदाम्पत्यसुनिर्वृतं सुतं
स्वतो विनीतं गुरुभिश्च सर्वतः ।
त्रिलोकरक्षाक्षमबाहुविक्रमं
जनेश्वरः प्रेक्ष्य चिराय निर्ववौ ॥ ११ ॥

धृतां चिराय त्रिजगद्धुरन्धरे
धुरं धरायास्तनयेऽवरोपयन् ।
स्वतः स्थितं धर्मपथेऽपि तं पुनः
शशास धर्मं सुतवत्सलो नृपः ॥ १२ ॥

महत्कुलं नस्त्वमवैषि विश्रुतं
महेशचूडामणिसंभवं शुचि ।
अनक्षजिद्भिर्मनसापि दुर्भरा-
मवैषि वत्स त्वमिमामपि क्षमाम् ॥ १३ ॥

नवोढयापि प्रकृतिप्रगल्भया
श्रियैव तावत्प्रथमं विमोहिताः ।
न जानते किंचिदसाधु साधु वा
निसर्गतस्तात नृपालसूनवः ॥ १४ ॥

प्रसञ्जयन्ति प्रथमं विमार्गगां-
स्ततः क्रमेण स्तुवते च तान्पुनः ।
प्रवर्तयन्त्यप्यपथे शनैः प्रभुं
खलाः स्वकार्यैकपराः समीपगाः ॥ १५ ॥

उपक्षिपन्तश्चकिता इवादितो
निषिध्यमाना इव कैश्चिदन्तरा ।
सुखेन दोषं द्रढयन्ति साधुषु
स्तुवन्त एव स्वगिरा दुराशयाः ॥ १६ ॥

परं कृतज्ञा इव पण्डिता इव
प्रभोर्हितैकप्रवणा इव स्वतः ।
जगत्तटस्था इव राज्ञि बालिशे
जनाः स्वमर्थं घटयन्त्यसाधवः ॥ १७ ॥

स्तुवन्त्यमित्रान्सुहृदं प्रतिक्षिप-
न्त्यवेक्षितुं भर्तुरगाधमाशयम् ।
बहून्विवादानिव कुर्वते मिथो
न जातु भिन्दन्ति रहः स्थितिं खलाः ॥ १८ ॥

इदं ह्युपादेयमिदं तु हेयमि-
त्युभे विविञ्चन्निजयैव मेधया ।
खलान्निगृह्णीष्व तदुक्तिवागुरा-
गृहीतवन्मुग्धवदाचरन्बहिः ॥ १९ ॥

जना जिहासन्ति नृपालमूष्मलं
तिरश्चिकीर्षन्ति मृदुं निसर्गतः ।
अतोऽप्रमत्तस्त्वमनुष्णशीतलो
भव प्रजानां शरदीव भास्करः ॥ २० ॥

अलोलुपानात्मविदो जितस्मया-
न्परीक्षितांश्च व्यसनेषु भूयसा ।
महाकुलीनान्महतो बहुश्रुता-
न्गृहाण मन्त्रेष्वखिलेषु मन्त्रिणः ॥ २१ ॥

प्रसादकोपैर्भवति क्षमापते-
रतिप्रवृत्तैरधरोत्तरं जगत् ।
अतः प्रवर्तस्व जनेष्वतन्द्रितो
विचारधाराविशदेन चेतसा ॥ २२ ॥

बहुश्रुतो न त्वमिवापरोऽधुना
न दीर्घदर्शी न च मन्त्रयोगवित् ।
प्रशासनीयस्तदपि स्वयं भवा-
न्प्रशासितारस्तव सन्तु मन्त्रिणः ॥ २३ ॥

अजातशत्रोरखिलार्थवेदिनः
प्रजानुरागैकपदस्य धीमतः ।
तव प्रकृत्या गुरुवृद्धसेविनो
मयोपदेश्यं किमिवात्र वर्तते ॥ २४ ॥

तथापि किंचिद्दिगियं प्रदर्शिता
श्रुता बहुभ्यो बहुधा च या मया ।
परस्तु भावो मम तात वर्तते
कुरुष्व तं चेतसि मा स्म विस्मरः ॥ २५ ॥

निजावतंसप्रसवोद्भवे कुले
न्यधायि लक्ष्मीरियतीयमीदृशी ।
महेश्वरेणेति विदन्न जातुचि-
न्ममत्वमस्यां कुरु राज्यसंपदि ॥ २६ ॥

यजाम देवान्जुहवाम पावके
ददाम विप्रेष्वपि वा कथं वयम् ।
शिवस्वमादाय भुवीति चिन्तय-
ञ्शिवं समाराधय सर्वकर्मभिः ॥ २७ ॥

शिवं यजाग्नौ शिवमर्च भास्करे
शिवं स्मरान्तः शिवमेव कीर्तय ।
शिवं द्विजेषु प्रतिपूजयानिशं
शिवैकनिष्ठो भव तात सर्वथा ॥ २८ ॥

शिवात्परं नास्ति यथा तथैव नः
शिवोऽपि नान्यो मधुरेश्वरादिति ।
सुनिश्चितालम्बितसुन्दरेश्वरः
सुखं महीं पालय शाश्वतीः समाः ॥ २९ ॥

इति क्षितीशः प्रतिबोधयन्सुतं
प्रयुज्य चास्मिन्प्रणते जयाशिषः ।
समाः सहस्राणि षडात्मना धृतां
धुरं स गुर्वीमवतार्य निर्ववौ ॥ ३० ॥

ततः स योगेन तनुं प्रजेश्वरो
विसृज्य नाड्या किल मूर्धलग्नया ।
अतीत्य मायाभुवनानि सर्वतो
जगाम शुद्धेऽध्वनि धाम शाश्वतम् ॥ ३१ ॥

उदक्रमीदेष यदा तदा प्रभृ-
त्युपेत्य विज्ञानकलाग्रगण्यताम् ।
अभूत्सहाय: करणीयपञ्चके-
ऽप्यनन्तरुद्रस्य धिया विशुद्धया ॥ ३२ ॥

विदन्ननित्यं जगदेव जन्मव-
द्विदन्नपि श्लाघ्यतरां गतिं पितुः ।
मनोऽभितप्तं मलयध्वजो नृप:
शशाक न स्थापयितुं वशे वशी ॥ ३३ ॥

कथंचिदालम्ब्य निजां स धीरतां
गुरोरशेषा निरवर्तयत्क्रियाः ।
तथाविधानां तनयाश्चरन्ति य-
त्तदर्हणं केवलमात्मभूतये ॥ ३४ ॥

पुरोधसा सिन्धुपिबेन योगिना
स मन्त्रिवृद्धैः सखिभिश्च बन्धुभिः ।
शुभे मुहूर्ते धुरि सुन्दरेशितुः
सितेन फाले भसितेन लाञ्छितः ॥ ३५ ॥

स्वतश्च्युतं लिङ्गशिरस्पदात्सुमं
पुरः स्फुलिङ्गानपि दीपनिःसृतान् ।
प्रशस्यमानं शकुनं महर्षिभिः
प्रणम्य मूर्ध्ना जगृहे जनेश्वरः ॥ ३६ ॥

प्रदक्षिणीकृत्य पुरं पुरन्ध्रिभिः
प्रवर्तितारात्रिकमङ्गलो नृपः ।
प्रविश्य राज्ञो भवनं परिष्कृतं
द्विजान्प्रभूतैर्द्रविणैरतोषयत् ॥ ३७ ॥

स भद्रपीठे सचिवैर्निवेशितः
सभाजयामास नृपोऽनुजीविनः ।
यथोचितं वाहनभूषणाम्बरैः
कटाक्षमन्दस्मितभाषितैरपि ॥ ३८ ॥

भुवं भुजे भूतदयां हृदन्तरे
कथां पुरारेरपि कर्णयोर्द्वयोः ।
अधत्त भूषामनपायिनीमसौ
परस्तु सोऽधत्त पुनर्न्यधत्त च ॥ ३९ ॥

यशःप्रतापैर्हरितोऽस्य भूषिताः
कुलं त्वनेनैव विभूषितं विधोः ।
अयं तु धृत्या दयया च भूषितः
शिवे तु भक्त्या सकलं विभूषितम् ॥ ४० ॥

यशोभिरस्यावदुर्विसृत्वरै-
रपि द्विरेफद्विपकाककोकिलाः ।
स्वतोऽवदातानि तु पूर्वभूभृतां
यशांसि सद्यो मलिनानि जज्ञिरे ॥ ४१ ॥

तदीयविश्राणनपोषितद्विज-
प्रवर्त्यमानाध्वरहव्यभोजिभिः ।
सुधाशवर्गैः परिपोषिताः कथं
सुरद्रुमा बिभ्रति तेन तुल्यताम् ॥ ४२ ॥

तदीयदानोदकपूरितोऽर्णव-
स्ततो निपीयाम्बु दिशन्ति वारिदाः ।
तदम्बुपुष्टौषधिवल्लभः शशी-
त्यदःप्रसादादखिलस्य दातृता ॥ ४३ ॥

समृद्धिमद्भिर्धरया समृद्धया
द्विजातिभिस्तद्विषये निवासिभिः ।
धृता कथंचित्तदनुग्रहेच्छया
तदीयदानेष्वपि संप्रदानता ॥ ४४ ॥

न कोऽपि तस्यातिचचार राष्ट्रगः
स यत्र दण्डं विनिपातयेन्नृपः ।
न चापि दण्ड्यः स्वयमात्मनोऽभव-
न्निवृत्तिशीलैः करणैर्निसर्गतः ॥ ४५ ॥

विनेतरि स्वामिनि वीतकल्मषे
विनिन्यिरे तद्विषये प्रजाः स्वतः ।
तपोधने द्वन्द्वजयिन्यवस्थिते
तदाश्रमस्था इव हिंस्रजन्तवः ॥ ४६ ॥

विचक्षणेऽस्मिन्व्यसनान्यपोहितुं
तटस्थवृत्तौ सरले हितैषिणि ।
अपि प्रजाः स्वान्कलहान्गृहेगृहे
निचिक्षिपुर्न्यासमिवाविशङ्किताः ॥ ४७ ॥

अकृष्टपच्यैः कलमैरलंकृता
न वृष्टिमप्यस्य चकाङ्क्ष मेदिनी ।
स्मरन्हविः स्वीक्रियमाणमध्वरे
ववर्ष कालेषु तथापि वासवः ॥ ४८ ॥

अनिच्छतान्तःकरणेन निर्गमं
विना शिवाराधनमन्यकर्मसु ।
स राज्यतन्त्रं सकलं च केवलै-
श्चकार बाह्यैः करणैर्महीपतिः ॥ ४९ ॥

धरा समस्ता द्विजदेवसात्कृता
दिवं द्विषद्भ्योऽपि ददौ सहस्रशः ।
अपि स्वमात्मानमदत्त शंभवे
किमप्यदेयं ददृशेऽस्य न प्रभोः ॥ ५० ॥

अनुस्मरन्नक्षरमक्षरं गुरोः
स पार्थिवेन्द्रश्चरमौपदेशिकम् ।
अवाललम्बे भृशमम्बिकापतेः
पदं समस्तामरसंपदां पदम् ॥ ५१ ॥

तपांसि तेपे युयुजे मनो दृढं
 ददावियाजाधिजगे जुहाव च ।
नृपो निशश्वास मिमेष चान्ततः
 शिवं यजामीति धियैव नान्यथा ॥ ५२ ॥

प्रपञ्चसर्गस्थितिभङ्गहेतुता-
 परम्पराविश्रमभूमिमादिमाम् ।
हरीन्द्रवेधोहरमातरं शिवां
 विशिष्य वव्रे शरणं जनेश्वरः ॥ ५३ ॥

मृगाङ्कचूडामणिमीनलोचनं
 दयामयं दर्शितसुन्दरस्मितम् ।
उदारभूषाशतमुत्पलाङ्कितं
 वपुस्तदेवास्य मनस्यवर्तत ॥ ५४ ॥

जगत्समस्तं स जडाजडात्मकं
 ददर्श देवो निमिषन्मिषन्नपि ।
उपात्तनीलोत्पलमुन्नतस्तनं
 हसन्मुखं हारकिरीटभूषितम् ॥ ५५ ॥

निमेषनिश्वासवदप्रयत्नतः
   स राज्यतन्त्रं सकलं च वर्तयन् ।
बभूव वाचा मनसापि कर्मणा
   शिवैकसंस्थो मलयध्वजो नृपः ॥ ५६ ॥

अदृश्यमश्राव्यमचिन्त्यमद्भुतं
   निरञ्जनं नित्यमनुश्रवाश्रवम् ।
अहंग्रहेणान्तरचिन्तयन्नृपः
   पराकृतद्वैतकथं परं महः ॥ ५७ ॥

परस्परेणानुपमर्दितं भजं-
   स्त्रिवर्गमित्थं समयं विभज्य सः ।
कदाचिदन्तःपुरमास्थितो नृपः
   प्रचक्रमे काञ्चनमालया कथाम् ॥ ५८ ॥

कुलं किलैतद्विपुलं सुधानिधेः
   प्रसक्तविच्छेदमिवान्तरा मया ।
अतः कथं स्याच्छिवदाससन्तते-
   रभङ्ग इत्यस्ति सचिन्तता मम ॥ ५९ ॥

न नः कुलेऽस्मिञ्शिवदीक्षयामले
सुतान्निवापः पितृभिर्जिघृक्षितः ।
महन्महेशानुचरार्पणव्रतं
तथापि मा लोपि मयेति चिन्त्यते ॥ ६० ॥

इदं हि मर्त्यामृतमित्युदीरितं
प्रजायते यन्मनुजः प्रजामनु ।
अतः प्रसाध्यैव किलापरामृतं
परामृतायोपनमेदिति श्रुतिः ॥ ६१ ॥

शिवार्पिताशेषभरा निराशिषः
शिवार्चनामात्रपदाधिकारिणः ।
कथं नु याचेमहि लोकमातरं
कथं न याचेमहि वा कुलक्षये ॥ ६२ ॥

इति स्वतोऽनध्यवसायमुद्रितं
पतिं विषीदन्तमियं पतिव्रता ।
जगाद वाक्यैर्हृदयानुरञ्जिभि-
र्जगत्तपस्यापरिपाकजन्मभिः ॥ ६३ ॥

भवान्प्रमाणं विशये विपश्चितां
भवन्तमस्मिन्ननुशास्तु कोऽपरः ।
विवेक्तुमत्रार्हति मीनलोचना
तथाविधः कोऽप्यथवा तदाश्रितः ॥ ६४ ॥

अनावृतज्योतिषि तेजसां निधा-
वनागतातीतभवद्विवेचिनि ।
तदत्र तिष्ठेमहि कुम्भसंभवे
स खल्विहामुत्र च नः प्रशासिता ॥ ६५ ॥

इति प्रियाया हृदयंगमं वचो
निपीय देवो निभृतेन चेतसा ।
जगाम सद्यः शरणं पुरोधसं
स च स्मृतः संनिदधे तपोधनः ॥ ६६ ॥

तमर्घ्यपाद्यादिकया सपर्यया
सभाजयन्तौ प्रणिपत्य तावुभौ ।
निवेश्य पीठे नवरत्ननिर्मिते
निषेदतुस्तत्सविधे तदाज्ञया ॥ ६७ ॥

कृताञ्जलिं पार्थिवमग्रतः स्थितं
तथाविधां काञ्चनमालिकामपि ।
दृशानुगृह्णन्करुणार्द्रया मुनि-
र्गिरं प्रभावानुगुणामुदाहरत् ॥ ६८ ॥

महत्किलेदं शिवयोगिनां कुलं
न यत्र शक्यं जनितुं पृथग्जनैः ।
तदत्र मीमांसितमद्भुतं त्वया
श्रुतस्य शीलस्य कुलस्य चोचितम् ॥ ६९ ॥

प्रवृत्तिधर्मं कतिचित्क्वचिद्विदु-
र्निवृत्तिधर्मः सुतरामगोचरः ।
अमुं किलार्थं विमृशन्त आसते
महर्षयो ब्रह्मसदस्यहर्निशम् ॥ ७० ॥

न नित्यनैमित्तिककर्मशीलतां
कदापि नैष्कर्म्यविरोधमर्हति ।
पतेदिमां प्रत्युत संत्यजन्निति
स्मरन्ति शिष्टाः स्वयमाचरन्ति च ॥ ७१ ॥

ऋणार्थवादैरधिगत्य नित्यता-
मपत्यवेदाध्ययनाग्निकर्मसु ।
समं प्रवृत्ता गृहिणस्तपोधना
निवृत्तिनिष्ठा अपि गौतमादयः ॥ ७२ ॥

रहस्यमप्यत्र चिराय गोपितं
तवोपदेश्यं हृदि तात वर्तते ।
समाधिनिर्धूतमलेन चेतसा
गृहाण कालोऽयमुपस्थितः शुभः ॥ ७३ ॥

इयं हि पत्नी भवतः पुरा चिरा-
दुपास्त देवीमिह मीनलोचनाम् ।
जगज्जनन्या जननी भवेयमि-
त्यपि प्रपेदे वरमन्यदुर्लभम् ॥ ७४ ॥

पतिस्त्वमस्यै शिवयैव कल्पितः
समुल्लिखन्त्यावतरं निजं क्षितौ ।
इदं तु चिन्त्यं निपुणं कथं पुनः
परात्परं वस्तु तदाविरस्त्विति ॥ ७५ ॥

क्रियावतामग्निमुपाश्रिता सती
ददाति या नैकविधान्मनोरथान् ।
अतोऽद्य वैतानिकहव्यवाहना-
दुदेतु सेति प्रतिभाति भूयसा ॥ ७६ ॥

इतीरिते तेन विनेदुरुच्चकै-
रनाहता दुन्दुभयो दिवौकसाम् ।
नृपस्य देव्या अपि दक्षिणेतरे
विलोचने प्रास्फुरतां च तत्क्षणम् ॥ ७७ ॥

प्रदक्षिणीकृत्य स विन्ध्यमर्दनं
पतिः क्षितेः काञ्चनमालया समम् ।
प्रणम्य रोमाञ्चितविग्रहोऽवद-
त्प्रमोदबाष्पस्थगिताभिरुक्तिभिः ॥ ७८ ॥

क्व सा चिदानन्दमयी जगत्प्रसूः
क्व किंपचानौ भगवन्निमौ जनौ ।
अहो भवत्पादरजःप्रमार्जन-
प्रभावसंपत्परिपाक ईदृशः ॥ ७९ ॥

तवास्मि सूनुस्तव तात किङ्कर-
स्तव स्वभूतोऽस्मि सहानुबन्धिभिः ।
यथानुगृह्णासि तथाचरेयमि-
त्यसावियानेव मनोरथो मम ॥ ८० ॥

इति प्रपन्नं मलयध्वजं नृपं
शताश्वमेधावभृथाप्लुतं मुनिः ।
स भाविकर्मण्यधिकारसिद्धये
शशास भूयो हयमेधकर्मणि ॥ ८१ ॥

इत्थं प्रसादविहिताशिषि कुम्भयोनौ
याते तपोवनपदं पुनरेतुकामे ।
आराधयत्क्षितिपतिः शिवमश्वमेध-
संभारसंभरणसंभ्रमतोऽपि तावत् ॥ ८२ ॥

इति पञ्चमः सर्गः ॥



## षष्ठः सर्गः ॥

आहर्तुं ययुमभितो ययुर्नियुक्ता
मर्त्या ये किल मलयध्वजेन राज्ञा ।
लब्ध्वा ते कचिदथ सोमपात्मजं द्रा-
गाजह्रुः स्वयमपि सोमपं तुरंगम् ॥ १ ॥

विस्तीर्णामथ तपनीयपङ्कजिन्या
व्यातेनुस्तटभुवि तस्य यज्ञशालाम् ।
आरादप्यवनिभुजां महोपकार्या
निःसंख्यानुटजगणांश्च तापसानाम् ॥ २ ॥

आनीते तुरगवरे समाहृतायां
सामग्र्यामतिथिसभाजनोचितायाम् ।
आगच्छत्सह मुनिभिः परावरज्ञै-
र्ब्रह्मर्षिश्चुलुकितसागरः सशिष्यः ॥ ३ ॥

आराध्य प्रमथपतिं महोपहारै-
मीनाक्षीमपि मलयध्वजः सदारः ।
आरेभे सवनमनुज्ञया मुनीना-
मागस्त्यं चरणयुगं प्रणम्य सद्यः ॥ ४ ॥

स्वायत्तामपि दुरतिक्रमात्प्रतापा-
त्संगृह्णन्भुवि जनतां स साङ्ग्रहण्या ।
मुक्ताश्वो धृतनियमः पदेऽस्य होमं
कुर्वाणः समवसदग्न्यगार एव ॥ ५ ॥

स्वच्छन्दं हयमभितोऽपि संचरन्तं
संगुप्तं नृपपुरुषैः शतैश्चतुर्भिः ।
रोद्धुं यद्यपि न शशाक राजलोकः
शक्तोऽभूत्पुनरखिलोऽनुरोद्धुमेनम् ॥ ६ ॥

कीर्त्याविष्कृतसरणिं प्रतापगुप्तं
पश्यन्तस्तुरगमितस्ततश्चरन्तम् ।
तद्धव्यग्रहणरसार्द्रतालुमूला
वर्षान्तं विबुधगणाः प्रतीक्ष्य तस्थुः ॥ ७ ॥

सर्वैरप्यधिगतवाजिमेधकाण्डैः
संपूर्णे किल विषयेऽस्य वाजिरक्षाः ।
वृत्त्यर्थं क्वचन किमप्यनाददानाः
स्वैः स्वैः स्वैः कथमपि वर्तयांबभूवुः ॥ ८ ॥

अश्वत्थे क्षणमवबध्य तं तुरंगं
संपूर्णे शशिनि समेत्य तिष्ययोगम् ।
आवृत्तं नगरमभि प्रचोदयन्तो
निन्युस्तं नृपपुरुषा हिमावसाने ॥ ९ ॥

आयाता धरणिभुजो यदासमुद्रा-
दायाताः सकलकलाविदश्च लोकाः ।
आयास्यन्त्यमरगणाश्च हव्यहेतो-
स्तेनायात्स्वयमपि कौतुकी वसन्तः ॥ १० ॥

निःशेषोपरतरसालपल्लवाशा-
निर्विण्णैर्वनभुवि कोकिलैस्तदानीम् ।
आसेदे शिशिरदिनान्तसुप्रबुद्धै-
राकाशाच्च्युत इव पञ्चमो निनादः ॥ ११ ॥

प्रम्लाना धरणिरुहः स्वतः प्रसेदु-
निष्क्रान्तो मलयगिरेर्बहिः समीरः ।
वीरश्रीर्विषमशरस्य बाहुकाण्डे
विश्रान्तिं स्वयमभिरोचयांबभूव ॥ १२ ॥

मालिन्यं दधति मषीविलेपनेन
प्रावण्यं युवतिषु घोषयन्ति यूनाम् ।
झंकुर्वद्भ्रमरनिभेन मीनकेतोः
संचेरुर्बहिरिव शासनाक्षराणि ॥ १३ ॥

कूजन्तो मदनपुरोहिता द्विरेफाः
पुष्पाणि ध्रुवमभिमन्त्रयांबभूवुः ।
स्वस्थानस्थितिमपरित्यजन्त एते
विध्येयुः किमितरथा शराः शरव्यम् ॥ १४ ॥

आनङ्गं निगममजस्रमुद्गिरन्तो
भैक्षेण प्रतितरुवीथि वर्तयन्तः ।
निर्निद्रास्त्वहनि निरन्तरं द्विरेफा
आचार्ये वटव इवावसन्वसन्ते ॥ १५ ॥

अध्वर्युं मलयसमीरमन्यपुष्टं
होतारं वनभुवि सामगं द्विरेफम् ।
ब्रह्माणं मधुमपि सादरं वृणाना
आजह्रुर्मदनमहाध्वरं युवानः ॥ १६ ॥

मोहान्धे जगति विपश्चितो यतः के-
ऽप्यग्नीनादधुरयजन्त चास्तशङ्काः ।
तन्मूलं ध्रुवमयशो दिशो दशापि
प्रावारीदसमशरस्य भृङ्गदम्भात् ॥ १७ ॥

आमूलादविरलमाचिते प्रवालै-
श्चूतेऽपि प्रययुरतोषमन्यपुष्टाः ।
सर्वाणि ग्रसितुमिमानि यन्न शेकुः
स्थातुं वा यदपि न शाखिकामपश्यन् ॥ १८ ॥

के भृङ्गाः क इव पिकाः समीरणः कः
कश्चन्द्रः क इव मधुर्मनोभवः कः ।
दौर्भाग्याद्विरहिजनस्य दुर्विभेदं
हन्तासीत्कथमिदमैकमत्यमेषाम् ॥ १९ ॥

आचूडं कुसुममया मधोः प्रसादा-
द्वासन्तीविचकिलचूतचम्पकाद्याः ।
धुस्तूरेष्वपि च निरीक्ष्य तां समृद्धिं
मन्दाक्षादिव नतमौलयो बभूवुः ॥ २० ॥

उन्मीलन्मधुमदतुन्दिला द्विरेफा
उद्दामस्तबकपरिष्कृता लताश्च ।
अन्योन्यं यदिह कथंचिदभ्यजान-
न्सा संपत्सुरभिकटाक्षवीक्षणानाम् ॥ २१ ॥

आक्रम्य क्षितितलमावृतं तुषारै-
स्तद्वार्तामपि न मधुर्यदा विषेहे ।
शीतांशौ हिमवति च द्वयोस्तदानीं
लब्धं तैरभयमितो हतावशिष्टैः ॥ २२ ॥

आ द्वन्द्वादपरिगृहीतदेहभेदा-
दा कीटभ्रमरपिपीलिकोद्भिजेभ्यः ।
न क्वापि प्रतिहतिरैक्षि शुश्रुवे वा
तत्कालं कुसुमशरासशासनस्य ॥ २३ ॥

आस्तां तद्रतिपरिणेतुराधिपत्यं
मन्देऽस्मिन्नपि खलु मारुते प्रवृत्ते ।
कृत्यन्वकृति पुरतश्च संप्रचेलु-
र्मांद्यन्तः शुकपिकशारिकाद्विरेफाः ॥ २४ ॥

आरामे किसलयमक्ष्णि शीथुरागः
कान्तानां कमलवनेषु केसराणि ।
इत्येभिः प्रकटितविश्वरूप एव
प्रायेण व्यजयत मान्मथः प्रतापः ॥ २५ ॥

संगोप्य भ्रमरशशाङ्ककोकिलेभ्यः
संप्राप्ते तमसि महत्याधिज्यधन्वा ।
एकाकी रतिपतिरित्वरीरनैषी-
त्संकेतं भुवनभयंकरे निशीथे ॥ २६ ॥

कान्तानां नखनिखनैर्दृढोपगूहा-
न्सीत्कारान्दशनपदैश्च साधयन्तः ।
प्रेयांसः पुनरुभयानिमानतीता-
नस्मार्षुर्हिमसमयेष्वयत्नलभ्यान् ॥ २७ ॥

दुर्दान्तं मदनमवेक्ष्य निर्ममे किं
वर्मैकं युवसु वधूमयं विधाता ।
यद्योगे मदनशराः प्रसूनमात्रं
यत्त्यागे कुलिशदशाममी वहन्ति ॥ २८ ॥

संपश्यन्गिरिशतपोविलोपकोप-
व्यापन्नं सुहृदमनन्यजं वसन्तः ।
शुश्रूषामकृत शिवार्चने मुनीनां
प्रत्यग्रैर्दलकुसुमैर्वनद्रुमाणाम् ॥ २९ ॥

आशीताचलमभिगम्य संनिवृत्ते
धन्येऽस्मिन्धरणिभुजस्तुरंगवर्ये ।
उत्कण्ठाभरभरिता इवोत्तराशा-
मासेदुः स्वयमहिमत्विषस्तुरंगाः ॥ ३० ॥

संपूर्णे नियमभरेण वत्सरेऽस्मि-
न्संप्राप्ते सति सह वाजिना वसन्ते ।
आदिष्टः स मुनिभिरश्वमेधकर्म-
ण्याराद्धुं गिरिशमदीक्षत क्षितीशः ॥ ३१ ॥

अध्वर्युः समजनि तव कुम्भजन्मा
होतृत्वं प्रतिगतमाश्वलायनेन ।
औद्गात्रं समधृत जैमिनिर्मुनीन्द्रो
ब्रह्मासीद्बहुविदरुन्धतीसहायः ॥ ३२ ॥

प्रागन्तःकरणममुष्य केवलं ये
प्राजानन्भुवि नवनीतनिर्मितं ते ।
अभ्यक्तं नवनवनीतचर्चिकाभि-
स्तं विज्ञा बहिरपि तन्मयं विजज्ञुः ॥ ३३ ॥

आबाल्याददतिथिषु मुक्तहस्त एषः
क्ष्मापालः किल मलयध्वजः प्रकृत्या ।
तज्जानन्नपि निखिलं निबद्ध्य मुष्टिं
दीक्षासु क्षणमपि नासितुं शशाक ॥ ३४ ॥

अध्वर्यौ भगवति तत्र कुम्भजन्म-
न्यायज्ञं धरणिपतित्वमश्नुवाने ।
दुर्भिक्षं शिथिलमजायत द्विजाना-
माषाढाजिनतृणमुष्टिविष्टरेषु ॥ ३५ ॥

नीवारान्वपत कुशान्प्रवर्धयध्वं
सिञ्चध्वं खदिरपलाशबिल्वपोतान् ।
सद्यः संचिनुत मृदूनि वल्कलानी-
त्यादिक्षन्नृपपुरुषानगस्त्यशिष्याः ॥ ३६ ॥

तस्मिन्नप्यददति पार्थिवे निषेधा-
द्यद्भुक्तं वसितमुपार्जितं च विप्रैः ।
दातारः स्म इति कृताग्रहाः समस्ताः
शक्ताः किं शततममंशमत्र दातुम् ॥ ३७ ॥

भुञ्जानानपरिमितान्बहून्पदार्था-
न्भूदेवानधिसवनं निरीक्ष्य देवाः ।
भागं नः क्रतुषु विधाय विप्रलेभे
पापीयान्विधिरिति मन्त्रयांबभूवुः ॥ ३८ ॥

तस्याग्रे धरणिभुजः क्रियान्तराले-
ष्वातेनुः स्वयमृषयो बहून्विवादान् ।
न्यायानुश्रवपदसांख्ययोगतन्त्र-
प्रस्थानप्रवचनदेशिका महान्तः ॥ ३९ ॥

यद्यात्यन्तिकसुखदुःखहानिरूपं
कैवल्यं कथमशपद्भवानहल्याम् ।
तादृक्षामुपलदशां श्रयेति कोपा-
दित्यूचुः कतिचन गौतमं मुनीन्द्राः ॥ ४० ॥

कं दोषं कथयत संप्रसक्तदुःख-
व्यावृत्तिं फलमुपगच्छतां पुरो नः ।
अज्ञानक्षतिरुपले तवापि किं ने-
त्याचख्युः प्रतिपदमक्षपादशिष्याः ॥ ४१ ॥

अज्ञानाद्यदि परिकल्पितं जगत्स्या-
दज्ञानां प्रथमगणेय ईश्वरः स्यात् ।
निःसीमा तव हि मतेऽस्य मूढतेति
व्यासं प्रत्यकृषत केऽपि पूर्वपक्षम् ॥ ४२ ॥

अज्ञानं प्रकृतिमपेक्ष्य विश्वमेत-
त्सर्वज्ञे सृजति भवेऽपि यत्त्वयोक्तम् ।
अज्ञानं तदिदमनङ्कुशं तवैवे-
त्याचख्युः सदसि तु बादरायणीयाः ॥ ४३ ॥

जातिश्चेद्भवति पदेषु साधुभावो
भाषायां श्रुतिषु च स द्विधा कथं स्यात् ।
गेहे गीर्वनभुवि गर्दभः किमु स्या-
दित्युच्चैरपजहसुः परे पदज्ञान् ॥ ४४ ॥

अन्येऽन्ये श्रुतिषु जगत्सु चापि शब्दा-
स्तद्भेदं निपुणमजानतां कृते वः ।
अस्माभिः स्फुटमनुशिष्टमात्तमौना
वर्तध्वं पदपदवी दवीयसी वः ॥ ४५ ॥

अस्मद्व्याकरणगृहीतशक्तियोगा-
नस्मासु प्रथममिमान्प्रयुज्य शब्दान् ।
युक्तादीयत गुरुदक्षिणा किलेति
प्रत्यूचुः प्रथमविपश्चितो विपक्षान् ॥ ४६ ॥

हिंसातो यदि दुरित क्रतुष्वपि स्या-
त्पुण्यं किं न भवति पारदारिकाणाम् ।
उत्सन्नं किल कुलमुद्धरन्त्यमीति
व्याजह्रुः कपिलमते कलङ्कमेके ॥ ४७ ॥

शास्त्रं चेत्किमपि तथास्ति साधयामो
दुष्कृत्यैरपि सुकृतानि कात्र भीतिः ।
यूयं देवरवरणे यथा गृणीथे-
त्याहुः स्म प्रतिवचनानि तत्त्वनिष्ठाः ॥ ४८ ॥

योगाख्यं वदसि यमङ्गिनं समाधिं
तं ब्रूषे ननु कथमङ्गमष्टमं च ।
अङ्गाङ्गिव्यतिकरदुःस्थितं मतं ते
को गृह्णात्विति जगदुः परे फणीन्द्रम् ॥ ४९ ॥

सामान्यं किमिह क इष्यते विशेषः
को योगः क इव समाधिरित्यबुद्ध्वा ।
अर्वाचां व्यवहरतामयं प्रलापः
साधीयानिति जहसुः पतञ्जलीयाः ॥ ५० ॥

आयास्यन्त्यनुपदमत्र हव्यहेतो-
र्नन्वस्मिन्महति मखे सुराः समस्ताः ।
तान्सर्वानपलपितास्यहो कथं वे-
त्याचख्युः कतिचन जैमिनिं मुनीन्द्राः ॥ ५१ ॥

ये ह्युच्चावचमवजानते प्रपञ्चं
मिथ्येति त्रिभुवनदेशिका महान्तः ।
तच्छिष्या वयमपि शक्तितो वदामे-
त्याहुस्तान्प्रति चतुरास्तु पूर्वतन्त्रे ॥ ५२ ॥

तत्रेत्थं द्विजसदसि प्रवृत्तजल्पे
स्थेयत्वं स्वयमवलम्ब्य भाषमाणः ।
दीक्षाहानुपसदहानपि व्यतीतः
सौत्येऽहन्यवतरति स्म पार्थिवेन्द्रः ॥ ५३ ॥

ये षट् त्रिः खदिरपलाशबिल्वरूपा
यौ चोदुम्बरतरुजौ सराज्जुदालौ ।
ते यूपा अवतरतां दिवः सुराणां
निश्रेण्यो भुवि निहिता इव व्यराजन् ॥ ५४ ॥

अग्निष्ठे समुपनिबद्धय राज्जुदाले
संनद्धं कुशरशनागुणेन गाढम् ।
संप्रौक्षन्हयमभितो महर्त्विजस्तं
सिद्धार्थैरपि विधिगौरवेण मन्त्रैः ॥ ५५ ॥

आलब्धे शमितृभिराश्वमेधिकेऽश्वे
चन्द्राख्यं कलशभवः प्रगृह्य मेदः ।
शाखायां क्षणमुपसाद्य वेतसस्य
स्रौवाग्रादखिलमवद्यति स्म होतुम् ॥ ५६ ॥

आश्राव्य स्वयमृषिराश्वलायिनीये
याज्यान्ते हविरजुहोत्स्रुचो मुखेन ।
यज्ञेशे भगवति भावनाप्रकर्षा-
द्भूपालो जगदजुहोत्स तन्मुखेन ॥ ५७ ॥

अप्यन्तस्तिमिरहरं शरीरभाजा-
मप्राप्यं जनुषि पुरातपोविहीनैः ।
सौरभ्यं हविषि हुते समुज्जिहानं
व्याजिघ्रन्सदसि विपश्चितो महान्तः ॥ ५८ ॥

बिभ्यत्सु श्रुतिमतिलङ्घ्य संप्रदातुं
हव्यं तत्तदभिमतं द्विजर्षभेषु ।
पौरोडाशिकचरुपाशुकादिभागा-
न्स्वीचक्रुः स्वयमपमित्य देववर्गाः ॥ ५९ ॥

चन्द्रे तु ज्वलनहुते हयस्य तस्मि-
न्नासन्ये सलिलमुचस्तदीयधूमात् ।
वर्षन्ति स्वयमधुनापि मौक्तिकानां
व्याजात्ते तमिव कर्णीकृतं वमन्तः ॥ ६० ॥

आगाता किल यजमानकामनाना-
मुद्गीथावयवसमष्ट्युपासनज्ञः ।
उद्गानं व्यतनुत जैमिनिस्तदानी-
माकाङ्क्षन्नवतरणं जगज्जनन्याः ॥ ६१ ॥

प्रत्यक्षं विबुधगणेष्वदत्सु हव्यं
साकूतस्मितमवलोकितः सदस्यैः ।
सिद्धान्तं स दिविषदामविग्रहत्वं
व्याचख्यौ कलहविपर्ययं महर्षिः ॥ ६२ ॥

देया भूरिह खलु दक्षिणेति शास्त्रं
सर्वा भूरपि चतुरर्णवी परीता ।
दत्ता नः क्षितिरमण त्वयेति हृष्टा
आशीर्भिः सदसि तमृत्विजोऽभ्यनन्दन् ॥ ६३ ॥

निष्क्रीय द्विगुणधनैः पुनर्धरित्रीं
रक्षायामनधिकृतैर्द्विजैर्वितीर्णाम् ।
भूयोऽपि द्विजकुलसाच्चकार सर्वां
स्वां लक्ष्मीमपि मलयध्वजो नृपालः ॥ ६४ ॥

राजर्षेरवभृथकर्म वाजिमेधे
स्नातारः सह मुनयो वसिष्ठमुख्याः ।
तीर्थं तु त्रिशिखभवा सरोजिनी से-
त्येकैकं त्रिभुवनपावनं तदासीत् ॥ ६५ ॥

तौ मित्रावरुणसुतौ मिथो विमृश्य
ब्रह्मर्षी विदितसमस्तवेदितव्यौ ।
अम्बाया अवतरणाय कांचिदिष्टिं
पुत्रीयां त्वरितमथोपचक्रमाते ॥ ६६ ॥

संकल्पं व्यधित नृपः स यावदिष्टौ
तावद्भुव्यवतरितुं शिवापि चक्रे ।
वैतानादुदयमुपेहि पावकादि-
त्यादिष्टा स्वयममृतांशुशेखरेण ॥ ६७ ॥

संप्राप्तुं त्रिभुवनमातरं कुमारीं
संनद्धो ननु यजमान एव पत्न्या ।
इत्यग्नीदवददुपांशु शासितारं
पत्नीसंनहनविधौ प्रचोद्यमानः ॥ ६८ ॥

प्रासीदज्जगदखिलं प्रदक्षिणार्चिः
स्वीचक्रे हविरनलः सुवर्णवर्णः ।
उत्तस्थौ नवलवलीविपाकपाण्डु-
र्धूमोऽपि स्फुरदरविन्दगन्धसान्द्रः ॥ ६९ ॥

तद्दिव्यं त्रिभुवनधाम धाम शैवं
होतव्ये हविषि विभावयन्महर्षिः ।
उद्बोध्य क्षितिपमुदङ्मुखः स तिष्ठ-
न्वैताने ज्वलति जुहाव हव्यवाहे ॥ ७० ॥

आज्याहुत्यभिपतनप्रवर्धमाना-
दग्नेस्तत्क्षणमुदियाय कापि कन्या ।
उन्मीलत्कुवलयदामकोमलश्री-
र्लावण्यामृतलहरीविवर्तमूर्तिः ॥ ७१ ॥

चूडासंघटितसुवर्णपद्मदाम-
व्यामिश्रग्रथितविलम्बिमौक्तिकौघा ।
प्रालम्बालकनिकरान्तराललक्ष्य-
व्यावल्गच्छफरविलोललोचनश्रीः ॥ ७२ ॥

कर्णाभ्यां मदनकराङ्गुलीयकाभं
ताटङ्कं मणिखचितं विभूषयन्ती ।
अव्याजस्मितभणितान्तरालदृश्य-
प्रत्यग्रप्रसृमरदन्तकुन्दपङ्क्तिः ॥ ७३ ॥

वक्त्रेन्दुव्यतिषजदेणभीतिहेतो-
र्वैयाघ्रं नखमधिकन्धरं दधाना ।
त्रातुं त्रीनिव तनयान्विधीशविष्णू-
न्त्रीन्वक्षोरुहवलयान्समुद्वहन्ती ॥ ७४ ॥

अभ्यग्रोन्मिषदमरद्रुपल्लवाभे
कुर्वाणा कुवलयकन्दुकं कराग्रे ।
सौवर्णाम्बरविलसन्नितम्बबिम्ब-
व्यालम्बिस्फुटमणिमेखलाकलापा ॥ ७५ ॥

अम्बाम्बेत्यमृतरसं गिरा किरन्ती
मञ्जीरक्कणितमनोहरं चरन्ती ।
सा बाला स्वयमभजन्नृपालपत्न्याः
पर्यङ्कं श्रुतिशिखरैः कृताभ्यसूयम् ॥ ७६ ॥

आलिङ्गन्त्यसकृदनुक्षणं स्पृशन्ती
चुम्बन्ती मुखकमलं मुहुर्मुहुश्च ।
पश्यन्ती विकसितपक्ष्मभिः कटाक्षै-
स्तां बालामलभत निर्वृतिं न माता ॥ ७७ ॥

आनन्दत्रुटितविशीर्णकञ्चुकान्ता-
द्वक्षोजादथ मलयध्वजप्रियायाः ।
अन्वस्यन्दत मधुरं पयः प्रभूतं
बिभ्रत्यास्त्रिभुवनमातरं कुमारीम् ॥ ७८ ॥

प्रेयस्या सविधमुपेत्य दीयमाना-
मुत्प्लुत्य स्वयमुपगूहितुं पतन्तीम् ।
कन्यांताममृतमयीमिवाददानः
कैवल्यं धरणिपतिस्तृणाय मेने ॥ ७९ ॥

मार्जन्तावसकृदुपर्युपर्युदञ्च-
द्बाष्पाम्भःप्रकरतरङ्गितानपाङ्गान् ।
अव्याजस्मितमधुराक्षरं कुमार्या
द्रष्टुं तन्मुखकमलं न शेकतुस्तौ ॥ ८० ॥

न स्मर्तुं प्रमथपतिं न कर्मशेषं
निर्वोढुं न च महतो मुनीन्प्रणन्तुम् ।
नान्योन्यं वदनमवेक्ष्य नन्दितुं वा
दंपत्योश्चतुरतया तयोर्बभूवे ॥ ८१ ॥

पश्यन्तावुरसि कुचाङ्कुरत्रयं तौ
बालायाः किमपि समाकुलौ यदास्ताम् ।
पर्जन्यस्तनितगभीरमन्द्रघोषा
वागेका नभसि तदा समुज्जजृम्भे ॥ ८२ ॥

तटातकां नाम तवात्मजामिमा
पतिर्भविष्यन्नवलोकते यदा ।
तदा तृतीयं कुचमण्डलं त्विदं
निमग्नमन्तर्नियतं भवेदिति ॥ ८३ ॥

श्रुत्वा सुधारसकिरं गिरमद्भुतां तां
निर्वर्त्य सर्वधनदक्षिणमध्वरं च ।
पाणौ दिशन्कुलगुरोः परदेवतां तां
तत्पादयुग्ममुपसंजगृहे सदारः ॥ ८४ ॥

हस्ते गृहीतां कलशोद्भवस्ता-
मध्यात्मविद्यां मुनिमण्डलाय ।
आनन्दबाष्पैः पुलकाङ्कुरैर-
प्यनक्षरं केवलमाचचक्षे ॥ ८५ ॥

प्रशिथिलकलुषं प्रशान्तमोहं
प्रमदतरङ्गपरंपराधिरूढम् ।
जगदखिलमभूदभूतपूर्वं
मनुजकुलावतरे जगज्जनन्याः ॥ ८६ ॥

इति षष्ठः सर्गः ॥



# सप्तमः सर्गः ॥

अथ कलशभवः शिवस्य मेधा-
विभवविवर्तमयीमिमां कुमारीं ।
मधु मधुरमपाययत्स मेधा-
समुपजनाय सकाञ्चनं सगव्यम् ॥ १ ॥

उचितमुपनिवेशिताङ्कदेशे
सुकृतिनि काञ्चनमालया सुता सा ।
अपरिचितचरीं प्रवृत्तिमाद्या-
मलभत मातृकुचामृतोपयोगे ॥ २ ॥

समजनि सुखिता कुमारिका सा
सकृदुपधाय मुखं स्तने जनन्याः ।
वदनसरसिजं दृशा पिबन्ती
न तु दुहितुर्जननी जगाम तृप्तिम् ॥ ३ ॥

अकृतकवचसा नभोविभागा-
त्स्वयमुदितेन कृतं तटातकेति ।
क्षितिपतिरतनिष्ट नाम तस्या-
स्त्रिभुवनकर्णरसायनाक्षरं तत् ॥ ४ ॥

कनकरजतशृङ्खलावबद्धे
मणिशयनीयतले महार्हतल्पे ।
मृदुनि समुपवेश्य तामगाय-
न्नवनिपतेरवरोधगास्तरुण्यः ॥ ५ ॥

प्रचलति यमपेक्ष्य भारतेऽस्मि-
न्सकलमिदं शुभकर्म भूविभागे ।
अजनि महिभृतस्ततः किलेयं
परमहिमालयतो यशोऽवदातात् ॥ ६ ॥

इयममृतमयी शरीरभाजां
बहिरबहिर्भवतापतापितानाम् ।
कलमधुरविराविणी च वाणी
करकमलोपगृहीतवल्लकीयम् ॥ ७ ॥

विहरसि यदि देवि जाग्रतीत्थं
जगदखिलं कुशलं प्रकाशते नः ।
निमिषसि यदि निष्क्रिया भवामः
प्रलय इवैष निमज्जति प्रपञ्चः ॥ ८ ॥

इति शिशुजनलालनानि गीता-
न्यवनिपतेरवरोधसुन्दरीणाम् ।
अनुजगदुरिवामरा निगूढाः
प्रतिनिनदैः परमात्मभावदृष्टया ॥ ९ ॥

समधृत वलयानि सा कुमार-
ग्रहपरिहारकृते महीमयानि ।
परिचयमिव कुर्वती भुजेन
क्षितिवलयं सकलं सुखेन वोढुम् ॥ १० ॥

विहृतिषु पितरौ सपात्रहस्ता
व्यतनुत सा भुजिना विनैव तृप्तौ ।
कथमिव भवति क्षुधा तृषा वा
सकृदनुसंदधतां तथाविधां ताम् ॥ ११ ॥

वियति विधुकलां प्रदर्श्यमानां
निभृतमवेक्ष्य नितान्तकौतुकेन ।
शिरसि कुसुममेतदर्पयेति
प्रतिमुहुरालपति स्म बालिका सा ॥ १२ ॥

व्यजयत पदकिङ्किणीरवोऽस्या
मणिभवनेषु ततस्ततश्चरन्त्याः ।
पदमिदमभितो विचिन्वतीना-
मुपनिषदामिव हर्षजः प्रणादः ॥ १३ ॥

अवददियमनन्विता इवार्थै-
रनुपहिता इव याः कथाः सखीभिः ।
कथमपि परमोपदेशदृष्ट्या
जगृहुरिमा मुनयः सुराश्च गूढाः ॥ १४ ॥

कति कति कृतिनः कुरङ्गपोता
विहरणसाधनतामवापुरस्याः ।
तरुषु पशुषु वा ध्रुवं जनिष्ये
तदहमहो समयः पुनर्व्यतीतः ॥ १५ ॥

क्रतुरवनिपतेरयं स तस्या
यदुपजहार विहारसाधनानि ।
स च परमजपो यदन्ववादी-
त्कलमधुराणि मुहुस्तदीरितानि ॥ १६ ॥

भवनविनिहितेषु भक्ष्यभोज्ये-
ष्वहरत सा कपटेन यत्कुमारी ।
नवनवमपरिक्षयं च भूत्वा
प्रकटमजायत सूक्ष्मदर्शिनां तत् ॥ १७ ॥

कतिचन किल कन्तुका महान्तो
गुणसमुदायमया निसर्गशुद्धाः ।
अजनिषत कुतूहलाय देव्या
निगमपथे चरतां निदर्शनाय ॥ १८ ॥

श्रुतिषु निहितदृष्टयोऽन्यविद्या
भगवति शूलिनि ताः स चादिशक्तौ ।
क्वचिदपि किल कन्तुके तु सापी-
त्यजनि मनागपि योगिनामसूया ॥ १९ ॥

कतिपयदिवसैः कथासु गीते-
ष्वजनि पटुर्घुटिकासु कन्तुकेषु ।
इति रहसि कथा बभूव पित्रो-
र्दुहितरि विश्वविधानमातृकायाम् ॥ २० ॥

विहृतिषु नयने पिधाय तस्याः
स्वयमभितश्चरितुं कृतोद्यमानाम् ।
त्रिजगति तिमिरावृते सखीना-
मपि चलितुं स्वपदान्न शक्तिरासीत् ॥ २१ ॥

अथ कुलगुरुमादिदेश मित्रा-
वरुणसुतं मलयध्वजो नृपालः ।
दुहितुरखिललोकमातृकाया
विरचयितुं किल मातृकोपदेशम् ॥ २२ ॥

निखिलजनिमतां सदा लिखन्ती
निटिलतलेषु शुभाशुभाक्षराणि ।
अलिखदपरिजानतीव बाला
कथमपि सा भुवि वर्णमेकमेकम् ॥ २३ ॥

अथ भुवि विलिखन्त्यचं तुरीयं
कलशभवस्य मुनेः पुरः कुमारी ।
सदयमुपदिदेश भक्तियोगा-
त्प्रणमति कामकलारहस्यमस्मिन् ॥ २४ ॥

निरवधिपरमात्मचिन्मयी सा
किमपि यदा निदधे कलासु दृष्टिम् ।
अहमहमिकया तदा परीयुः
सकलकलाश्च सखीजना इवैनाम् ॥ २५ ॥

विदितमविदितं च यत्किलासी-
त्प्रथममजातमुखाद्गृहीतमैशात् ।
तदखिलमवधारयन्नमुष्याः
कलशभवो गुरुदक्षिणां प्रपेदे ॥ २६ ॥

असिकुलिशगदाशरासशक्ति-
भ्रमरकतोमरभिण्डिपालशूलैः ।
प्रकटितरणकौशलाः खुरल्यां
समामिव सा विजहार वीरलक्ष्म्या ॥ २७ ॥

उपनिषदुदिता मतङ्गजा सा
प्रियदुहिता मलयध्वजस्य राज्ञः ।
मदभरभरितान्मतङ्गजेन्द्रा-
न्सहजतया वशमानिनाय सद्यः ॥ २८ ॥

हयवरमधिरुह्य संचरन्ती
खुरदलितक्षितिधूलिधूसराभ्रम् ।
अवतरणमनक्षरं जगौ सा
निजमिव भूमिभरावरोपणार्थम् ॥ २९ ॥

कवचितमवधूतखड्गरेखं
नियमितवेणिनिबद्धतूणमन्वक् ।
कतिचन कृतिनः सिषेविरेऽस्या-
स्तुरगरजोमसृणालकं वपुस्तत् ॥ ३० ॥

अथ शिथिलकुमारिका दशान्त-
प्रविरलकन्दलदद्भुताभिरूप्यम् ।
अलमकुरुत यौवनं तदानीं
त्रिभुवनमङ्गलमङ्गमङ्गमस्याः ॥ ३१ ॥

हृदि किल निममज्ज यावदन्तः
    प्रसवशरो मलयध्वजात्मजायाः ।
पिशुन इव स तावदुन्ममज्ज
    स्तनकलशस्तु हृदो बहिस्तदीयः ॥ ३२ ॥

शिथिलमनुससार बाललीलां
    विरलमपि प्रकटीचकार लज्जाम् ।
अनयदियमहानि पञ्चषाणि
    प्रतिनवयौवनमारुतावधूता ॥ ३३ ॥

वचसि विहसिते गतेऽवलोके
    वपुषि च कापि दशा क्षणे क्षणेऽस्याः ।
समजनि सदनैकदर्शनीया
    मदनजिदेकमनोविभावनीया ॥ ३४ ॥

परिविगलति शैशवे प्रवृत्ते
    तरुणिमनि प्रतिपन्नसर्वतत्त्वा ।
अजनि पितुरमात्यताधुरीणा
    परमगुरुश्च परात्मचिन्तने सा ॥ ३५ ॥

दुहितरि नृपतिस्तटातकायां
धुरमुभयोरपि लोकयोर्निवेश्य ।
भवममरगणादिवापवर्गा-
दपि परमं गणयन्नहान्यनैषीत् ॥ ३६ ॥

सुमतिमभिधयार्थतोऽपि देवः
कुलसचिवं निकटे निवेश्य जातु ।
हृदयगतमिदं समाचचक्षे
सविधजुषोः सहधर्मिणीकुमार्योः ॥ ३७ ॥

स्मरसि न सुमते यथा गुरु-
र्मामशिषदिमां श्रियमर्पयन्मयि प्राक् ।
अपहृतविमतां भुवं समाना-
मयुतमिमामनुपालयेति हृष्टः ॥ ३८ ॥

इदमवितथयाशिषा गुरूणां
तव च धिया धृतमित्थमाधिपत्यम् ।
अयुतमपि समाः समाप्निमीयुः
कुलमपि कुम्भभुवेदमुद्धृतं नः ॥ ३९ ॥

वसति च शिशुतामतीत्य वत्सा
   वयसि महीवलयानुपालनार्हे ।
अयमपरिणतो मनोरथो य-
   त्कलितकरग्रहमङ्गला तु नेयम् ॥ ४० ॥

दिवि भुवि धरणीतलेऽपि वाम्याः
   पतिरुचितो न हि कोऽपि भासते नः ।
तमिममपि मनोरथं मदीयं
   सफलयिता न चिरेण चन्द्रमौलिः ॥ ४१ ॥

अहमिव हितचिन्तने त्वमस्या
   भवसि च राज्यविधौ परः सहायः ।
भवति च जननी तटातकायाः
   परिणयकर्मणि भाविनि स्वतन्त्रा ॥ ४२ ॥

अधिगतमधिगम्यमीश्वराणां
   कुलमपि वीक्षितमुद्धृतं कुमार्या ।
मम तु खलु मनोरथोऽयमेको
   यदुत लभेय पदं जगज्जनन्याः ॥ ४३ ॥

इति वदति महीपतौ महिष्यां
तदनुगमाध्यवसायविज्वरायाम् ।
अगणितगुरुशोकसंप्रमूढा-
वथ सुमतिश्च तटातकाप्यभूताम् ॥ ४४ ॥

कथमपि शिशिरोपचारभेदै-
रलभत संविदमम्बिका न यावत् ।
चुलुकितचतुरर्णवो महर्षिः
स्वयमभिगम्य स तावदित्थमूचे ॥ ४५ ॥

जय जननि जय त्रिलोकवन्द्ये
जय गलितावरणात्मचित्स्वरूपे ।
किमिह मनुजताभिनीतिमात्रा-
द्भवति तमोभिभवः परस्य धाम्नः ॥ ४६ ॥

अभिनयमवधूय मानुषीणा-
मवसितकल्पमलं प्रपन्नमेनम् ।
त्वरितमनुगृहाण तीव्रपातै-
र्मलिनिमभङ्गनिरङ्कुशैरपाङ्गैः ॥ ४७ ॥

नियमथ जननीं दुरूहरूक्षां
परिणयकर्मणि ते प्रदानहेतोः ।
स्वमृणमियमपाकरोतु गौरी-
वितरणपुण्यसमुच्चयेन भर्तुः ॥ ४८ ॥

इति कलशभवेन बोधिता सा
जगदरणिर्जनकं चिरात्प्रपन्नम् ।
अमनुत परमे पदे निधातुं
सुलभमियच्छ्रितरक्षणं हि तस्याः ॥ ४९ ॥

प्रपदनपदवीजुषां जनाना-
मनुपरतेऽप्यपवर्गदानसत्रे ।
किमिव हि जनके कृतं मयासी-
दिति हृदि सा किल जिह्रयांबभूव ॥ ५० ॥

प्रवससि यदि तात हा हताहं
न गणय वत्स भयं कुतश्चनेति ।
व्यतिकरितपरावरात्मभावा
व्यवहरति स्म परापि देवता सा ॥ ५१ ॥

भुवमथ भुजयोः श्रियं दृगन्ते
चरणयुगे हृदयं च जीवितं च ।
विनिदधदयमात्मदेवताया
विगतभयो मलयध्वजोऽवतस्थे ॥ ५२ ॥

अथ दुहितुरनुग्रहेण तस्मि-
न्प्रविशति गर्भगृहं शशाङ्कमौलेः ।
निभृतमवलुलोकिरे समस्ता-
स्तदनु च तत्र महेशलिङ्गमात्रम् ॥ ५३ ॥

चिरपरिचितभर्तृविप्रयोग-
व्यसनपराहतिमूर्छितां सवित्रीम् ।
स्वयमपि परिरभ्य खिद्यमानां
कलशभवः पुनरम्बिकां बभाषे ॥ ५४ ॥

किमिदमनुचितं पुनः प्रवृत्तं
कियदियता भविता न दुःखमस्याः ।
अपनय तमसा कृतं जनन्या-
मलमभिनीय मनुष्यभूमिकां स्वाम् ॥ ५५ ॥

यदि भवसि शिवे जगच्छरण्या
यदि च भवद्वचनानि वेदवादाः ।
त्वयि कृतमनसि त्वयि प्रलीने
पितरि च ते किमु सन्ति शोचितारः ॥ ५६ ॥

इति विदितपरावरेण देवी
कलशभवेन महर्षिणानुनीता ।
अखिलकलुषभञ्जनैरपाङ्गै-
रनुजगृहे सुमतिं च मातरं च ॥ ५७ ॥

तदनु भुवनमङ्गले मुहूर्ते
प्रकृतिभिराप्तजनैः पुरोधसा च ।
सविधमुपगमय्य चन्द्रमौले-
र्मणिखचिते निदधे वरासने सा ॥ ५८ ॥

पशुपतिरथ पाण्ड्यकन्यकायै
विचकिलपुष्पमयीं वितीर्य मालाम् ।
पुनरपि स तया समर्प्यमाणां
हृदि चकमे निभृतं मधूकमालाम् ॥ ५९ ॥

कियदपि समवाप्य यत्कटाक्षं
क्षितिपतयो भुवने पराक्रमन्ते ।
न्यविशत यदि सैव वीरलक्ष्मी-
र्नृपतिपदे न कथं नमन्तु भूपाः ॥ ६० ॥

अवनिरफलदद्भुतानि सस्या-
न्यददुरपां निधयो मणीन्महार्घान् ।
उपददुरुचितान्गजान्वनान्ता
भुवि समये समये ववर्ष च द्यौः ॥ ६१ ॥

न यदतिचरितं जनेषु केना-
प्यपरिमितं ननु भाग्यमेतदस्याः ।
त्रिभुवनजननी कृतापराधं
कमिव नियच्छतु सा कथं दयार्द्रा ॥ ६२ ॥

अवनितलमवन्गुरुः किलास्याः
प्रशमयति स्म नृणां परं विवादम् ।
त्रिभुवनजनताविवादशान्तिः
परिणमति स्म सदैव हन्त तस्याम् ॥ ६३ ॥

नृपकरमखिलं वितीर्य शिष्टं
  यदिह शिवाय निरूप्रमस्ति किंचित् ।
तदपि ननु हरन्ति तावकीना
  इति वचनेषु जहास सा जनानाम् ॥ ६४ ॥

अहमहमिकया दिशोऽधिगन्तुं
  परिचलतां यशसां मिथो विमर्दात् ।
पथि पथि निभृतानि कानिचित्किं
  रजतहिमाद्रिमिषाद्यशांसि तस्याः ॥ ६५ ॥

कर इति हि जहार षष्ठमंशं
  परमखिलं तु शिवार्पणैकबुद्ध्या ।
स्वयमुपददिरे त एव चेत्त-
  त्कथमिव कोशसमृद्धिरस्तु नास्याः ॥ ६६ ॥

श्रियमखिलधनाकरेषु वाणीं
  विशयपदेषु महानसेऽन्नपूर्णाम् ।
करितुरगपदेषु वीरलक्ष्मीं
  न्यधित सखीरधिकारिणीस्तदा सा ॥ ६७ ॥

धनकनकमतङ्गजादिलक्ष्म्यो
धृतवपुषः सकलाः कलाश्च तस्याम् ।
अदधत परिचारिकाधिकारं
त्रिभुवनमातरि राज्यपालिकायाम् ॥ ६८ ॥

अनुसमयमशेत यद्यपीयं
तदपि सदैव तु जागरांबभूव ।
परिहृतनिमिषेण पाण्ड्यकन्या
तपनशशाङ्कमयेन दृग्द्वयेन ॥ ६९ ॥

अथ नृपतिसुतां कृताभिषेकां
विमतजयव्यवसायिनीं विधातुम् ।
शरदुपनिपपात शोषयन्ती
पथि पथि पङ्ककलङ्कितान्प्रदेशान् ॥ ७० ॥

तरुगिरिमरुसागराविशेषं
जगदखिलं जलरूपतां नयन्तः ।
समुपचितयशोभरा इवास-
न्सलिलमुचो विमलाः समन्ततोऽपि ॥ ७१ ॥

परिमितपयसः प्रशान्तघोषाः
परिगणनीयतटिन्नटीविलासाः ।
यदि सलिलमुचोऽपि ते बभूवुः
किमिव हि विश्वसिमः स्थिरं जगत्याम् ॥ ७२ ॥

अजनिषत हि येऽभिनन्दनीयाः
स्तनिततटिज्जलमेघमारुताद्याः ।
शरदि तनुमतां त एव निन्द्या
ननु समयानुगुणा गुणाः प्रजानाम् ॥ ७३ ॥

शिशिरितमवनीतलं समृद्धं
विपिनमपूरिषताशया जलानाम् ।
विरमति जलदेऽपि कस्य हानिः
परमिह केचन चातकाः प्रनष्टाः ॥ ७४ ॥

क्षितितलमभिपूर्य वारिपूरैः
किसलयिता विरचय्य वृक्षजातीः ।
किमपि फलमनाप्य नष्टमभ्रैः
फलभुगयं पुनराविरास कालः ॥ ७५ ॥

घनतिमिरमुखादनेन मुक्ता-
ववतरतैव यदर्कशीतभानू ।
तत इव शरकोरकापदेशा-
द्दिशि दिशि कीर्तिरनेहसो जजृम्भे ॥ ७६ ॥

कथमपि परिभूय मेघबन्धं
कियदिव कन्दलिते सुधामयूखे ।
अलिकलभमुखेन हर्षवार्ता
व्यचलदिवोत्पलिनीकुमुद्वतीनाम् ॥ ७७ ॥

अतिविततमवर्तताम्बुसत्रं
सलिलमुचां शरदा निवारितं तत् ।
उदभवदियमेव कीर्तिरस्याः
किमिव यशोऽन्यदतिप्रसङ्गभङ्गात् ॥ ७८ ॥

विरमति सति दुर्दिनेऽर्कचन्द्रा-
वनुभवतामभवन्मुदस्तदास्ताम् ।
गगनमपि निरीक्ष्य निष्कलङ्कं
कियदिव हन्त शरीरिणोऽभ्यनन्दन् ॥ ७९ ॥

मधुरविमलवारि मत्तभृङ्गं
परिणतशालि परास्तपङ्कलेशम् ।
किसलयितवनं समोष्णशीतं
क्षितितलमेव दिवोऽपि भोग्यमासीत् ॥ ८० ॥

कणिशकवलनोपजातगर्वाः
कलनिनदोपहृतामृताः शुकौघाः ।
समजनिषत संघशश्चरन्तो
मदनविसारितवागुरा इवाभ्रे ॥ ८१ ॥

प्रभवति नलिनी प्रसेदुरापो
विमलतरा विललास चन्द्रिकेति ।
जहृषुरतितरां जना यदेषा
विरहिजनस्य विपत्परम्परासीत् ॥ ८२ ॥

सविधगतपचेलिमेक्षुपर्व-
प्रसृमरमौक्तिकपातकान्दिशीकाः ।
दिशि दिशि शुकशारिका अधाव-
न्परि परिशालियवप्रियङ्गुदेशान् ॥ ८३ ॥

कमलवनमुपाश्रिता जरन्तः
करिकटभित्तिमुपस्थिता युवानः ।
इति मधुपगणा द्विधा विभिन्ना
अपि खलु कर्मकराः समं स्मरस्य ॥ ८४ ॥

चिरपरिमुषितप्रदेशचिह्नाः
समुपगताः सरसीः पुनश्च हंसाः ।
कथमपि रसवर्णगन्धभेदै-
र्निजनिजमम्बुजकोशमभ्यजानन् ॥ ८५ ॥

अतिविमलमयत्नशीतमम्भः
स्फुरदरविन्दसुगन्धयः समीराः ।
निरुपधिकरुणामयी च राज्ञी-
त्यजनि जनेषु परम्परा शुभानाम् ॥ ८६ ॥

तत्तन्नृपालपरिपालनसंप्रसूत-
मालिन्यमार्जनसमुज्ज्वलितां धरित्रीम् ।
भूयः स्वयं विमलयन्समयः प्रसादं
मन्ये चकाङ्क्ष मलयध्वजकन्यकायाः ॥ ८७ ॥

इति सप्तमः सर्गः ॥

# अष्टमः सर्गः ॥

जातुचित्तदनु पाण्ड्यकुमारी
चित्रिते सदसि रत्नगणेन ।
दर्शनैरपि च षड्भिरलभ्यं
दर्शनं निजमदात्प्रकृतीनाम् ॥ १ ॥

तापसा द्विजवरा धरणीशा
बन्धवः परिजना भटमुख्याः ।
पौरजानपदवन्दिगणाश्च
प्राविशन्सदसि तत्र विचित्रे ॥ २ ॥

तान्यथायथमथोपचरन्ती
सा प्रणामवचनस्मितदृग्भिः ।
अक्षमामजनयत्त्रिदशानां
मानवेषु मघवत्प्रभृतीनाम् ॥ ३ ॥

वीज्यमानमभितो युवतिभ्यां
चामरद्वयमदृश्यत तस्याः ।
यत्परत्वमथ यत्सुलभत्वं
तद्यशोयुगमिवातिविशुद्धम् ॥ ४ ॥

छत्रमेकतरमुच्छ्रितमस्या
मूर्ध्नि तेन शिशिरं जगदासीत् ।
एतदत्र हि निदर्शनमेषा
यत्प्रपञ्चवपुषा परिणेमे ॥ ५ ॥

अस्तुवन्कचन वन्दिगणास्ता-
मस्तुवन्नपरतः श्रुतिसंघाः ।
आद्यमत्र जगृहुर्गुणवत्त्वा-
त्सर्वे एव न परं तदभावात् ॥ ६ ॥

सा विसृज्य सकलानपि लोका-
नानिनाय परमाप्तसखीभिः ।
मातरं रहसि काञ्चनमालां
मन्त्रणाय सुमतिं सचिवं च ॥ ७ ॥

संनिवेश्य जननीं निजपीठे
सा च तच्चरणपीठनिषण्णा ।
मन्त्रिणा सुमतिना जयहेतो-
र्मन्त्रमित्थममन्त्रत बाला ॥ ८ ॥

यः किलानुशरदं विजयार्थी
पार्थिवं त्वरयसे गमनाय ।
स प्रवर्तयसि मां न कथं त्वं
बालिकेयमिति किं विशयानः ॥ ९ ॥

बालिकास्म्यनवगाढरणास्मि
प्रत्युतोपनिहितास्म्यवरोधे ।
आशिषा तदपि तावदमुष्या-
स्त्वद्धिया च विजयाय यतिष्ये ॥ १० ॥

मैवमालप कदाचन वत्से
मन्त्रिणा सुमतिना विजयो नः ।
स त्ववैति समयोचितमर्थं
सर्वमित्यभिदधे जननी ताम् ॥ ११ ॥

स स्म तां सुमतिराह कुमारीं
सस्मितां मृदुतया जनयित्र्याः ।
संस्मरन्गुरुमतीतममुष्या
बाष्पगद्गदपदं विनयेन ॥ १२ ॥

देवि मे निगदतः शृणु वत्से
यत्त्वमात्थ मयि सानुजिघृक्षा ।
तत्तथैव परथा न कथंचि-
द्वेदवादसुहृदो हि गिरस्ते ॥ १३ ॥

सत्यमेव विजये यतितव्यं
साधनं प्रथममत्र विपक्षः ।
मार्गयेऽहमपि नोपलभे तं
न व्यजिज्ञपमतस्त्वयि किंचित् ॥ १४ ॥

इत्थमुक्तवति मन्त्रिवरेऽस्मि-
न्कुम्भभूः स्वयमुपेत्य महर्षिः ।
आशिषो बहुविधा विरचय्य
व्याजहार मलयध्वजकन्याम् ॥ १५ ॥

साधयिष्यसि करग्रहणं त्वं
सर्वथा चलतु ते जययात्रा ।
भूरियं भवतु पुण्यतमा ते
पावनीभिरभितो भ्रमणीभिः ॥ १६ ॥

इत्युदीर्य जयनाम्नि मुहूर्ते
तां प्रवेश्य सबलामुपशल्यम् ।
तत्करग्रहमहोत्सववीक्षा-
कौतुकी स मलयं विजगाहे ॥ १७ ॥

सज्जितैव पृतना सकलेयं
किं त्विमां निशमिह व्यतिलङ्घ्य ।
श्वः प्रयाहि विनिवर्त्य निवर्त्या-
नित्युवाच सुमतिर्जननीं ताम् ॥ १८ ॥

पार्श्वमुत्तरमपि त्रिदशाद्रेः
सा प्रयास्यति यतो विजयाय ।
तं निरीक्षितुमिव प्रथमं तं
प्रस्थितो दिनकरश्चरमाद्रौ ॥ १९ ॥

निष्पतन्नपि रविश्चरमाद्रा-
वुद्दधार किरणाननुयातान् ।
ईदृशं व्यसनमस्पृशतः किं
लोकबन्धुरिति जीर्यति शब्दः ॥ २० ॥

निर्ममज्ज न जले कति वारा-
नुन्ममज्ज न पुनः कति वारान् ।
अद्य भास्वति मिमङ्क्षति विप्रै-
रर्पिता बत जलाञ्जलयोऽपि ॥ २१ ॥

नाधुनापि कथमस्तमुपैती-
त्यार्द्रकोपपरिपाटलकोणैः ।
वीक्षितो नु नयनैस्तरुणीना-
मंशुमानरुणिमानमयासीत् ॥ २२ ॥

कर्षणादुपलकण्टकदुर्गे-
ष्वन्तरा शिथिलितास्त्रुटिताश्च ।
अंशवः कतिचिदंशुमतः किं
सान्ध्यरागमपदिश्य निषेदुः ॥ २३ ॥

पश्चिमाचलगुहासु निलीनैः
   प्रार्थिता नु तिमिरैर्बलवद्भिः ।
सान्ध्यरागनिभृतो दिनभर्तु-
   र्भानवः कतिपये पथि लग्नाः ॥ २४ ॥

अध्वखेदशिथिला जरढा ये
   भानवो दिनमणेः पथि लग्नाः ।
दीपिकाहुतभुजामनुसायं
   तेऽभवन्नतिथयो भवनेषु ॥ २५ ॥

ये सहैव पतिताः पतताब्धौ
   ये च दूरतरमेव निवृत्ताः ।
ते द्वयेऽपि सदृशा दिनबन्धो-
   रीदृशः प्रभवतामविवेकः ॥ २६ ॥

संकुचन्नवदलाररमूल-
   स्थानदत्तमधुपोपलखण्डाम् ।
अम्बुजोदरकुटीमपिधाय
   श्रीरपि स्वयमितो निरयासीत् ॥ २७ ॥

आप्रभातमपि नर्तितुकामा
व्योमरङ्गभवनेऽवतरन्ती ।
किं निशैव विचकार समन्ता-
दञ्जलीनुडुनिभात्कुसुमानाम् ॥ २८ ॥

मज्जतीव न ममज्ज दिनेशो
नांशवोऽस्य निखिलाश्च निवृत्ताः ।
क्व स्थितानि मिलितानि कुतो वा
तावदेव तिमिराण्यभिवव्रुः ॥ २९ ॥

आकलय्य धनुराकलितज्यं
तस्थुषः सवयसो मदनस्य ।
अञ्चले निशितमादिममस्त्रं
चन्द्रमा मुकुलनेन चकार ॥ ३० ॥

सर्वरात्रमपि सा जनयित्र्या
सँल्लपन्त्यविरलं शफराक्षी ।
पञ्चषक्षणमितामिव मेने
ताम्रचूडनिनदेन तमिस्राम् ॥ ३१ ॥

आज्ञया स सुमतेरधिसैन्यं
ताडितो विजयदुन्दुभिरस्याः ।
आरवैर्जलदनादगभीरै-
रावृणोदिव दिवं च भुवं च ॥ ३२ ॥

निर्जराः किमपि पाणिविहारैः
पन्नगास्तु पुनरक्षिनिकोचैः ।
तैर्द्वयैरपि नरा व्यवजह्नु-
स्तद्रवैर्मुखरिते जगदण्डे ॥ ३३ ॥

उच्छ्रितध्वजमुपस्थितयोधं
सज्जवारणतुरंगशताङ्कम् ।
संननाह सकलं बलमस्या-
स्तूर्यघोषमुखरं निमिषेण ॥ ३४ ॥

दिग्जयाय कृतमङ्गलरक्षा
सा त्रिलोकजननी जनयित्र्या ।
निर्जगाम शिबिकामधिरूढा
संप्रचाल्य सकलं बलमग्रे ॥ ३५ ॥

अग्रतो भटगणैरथ वाहैः
कुञ्जरैरथ रथैरथ भृत्यैः ।
सौविदल्लनिकरैरथ तस्या
दूरतः प्रचलितं शिबिकाग्रे ॥ ३६ ॥

राजचिह्ननिवहैर्मणिवेत्रै-
र्वल्लकीडमरुवेणुमृदङ्गैः ।
गद्यपद्यपठनैरपि सेवां
सुभ्रुवो विदधिरे धुरि तस्याः ॥ ३७ ॥

अग्रतश्चलदसंख्यतुरंगो-
द्धूतभूतलरजःस्थगितार्के ।
दिक्तटेऽपि बुबुधे सरणिः स्वा
तद्बलेन पवनैरनुकूलैः ॥ ३८ ॥

सैन्धवैर्धुरि समुद्गमिता ये
पांसवो दश दिशः परिवव्रुः ।
तानशीशमदिह द्विरदानां
दानशीकरकिरः श्रुतिवातः ॥ ३९ ॥

विश्लथेषु शरदागमयोगा-
द्विष्वगैक्ष्यत पयोदकुलेषु ।
शातमन्यवशरासनखण्डं
हस्तलभ्यमिव हस्तिपकानाम् ॥ ४० ॥

दंशितस्तुरगबद्धनिषङ्गो
बाणपाणिरधिरोपितचापः ।
आप्तसैन्यसहितः सुमतिस्ता-
मन्वयाच्चरमतः शरपाते ॥ ४१ ॥

उद्गृहीतविहितैरुपहारै-
र्वेत्रपातचकिताः कृतसंघाः ।
आकुमारमवलोकयितुं तां
प्रस्थितां प्रकृतयः परिवव्रुः ॥ ४२ ॥

मुग्धसँल्लपनकौतुकभूम्ना
मन्दचालितमणीशिबिका सा ।
संप्रवादमशृणोदिति तासां
ग्राम्यभावपिशुनं विहसन्ती ॥ ४३ ॥

पश्य कालि मलयध्वजकन्यां
कुब्जिके जनकवन्मुखमस्याः ।
ज्यायसी हि दुहितुर्मम मासैः
पञ्चषैरियमहो शिशुरेव ॥ ४४ ॥

चण्डवातविगमादनु जाता
नन्वियं तुरगकर्मणि राज्ञः ।
कीदृशी चतुरता पुनरस्याः
कीदृशस्तु भविता गृहमेधी ॥ ४५ ॥

सन्ति नः शतमजा दश गावः
पञ्चषाश्च महिषा दयया ते ।
गव्यमेतदुपयुङ्क्ष्व कदुष्णं
दूरमम्बुतृषितासि पथि त्वम् ॥ ४६ ॥

अस्ति पर्युषितमस्ति यवागूः
सन्ति वंशशकलाद्युपदंशाः ।
शीतमुष्णमपि वा पिब कामं
गच्छ पुत्रि न पुनः क्षुधिता त्वम् ॥ ४७ ॥

प्रार्थयेमहि वयं भवदर्थे
कुक्कुटैश्च पशुभिः सह देवीम् ।
गच्छ पुत्रि सुखिनी पुनरेहि
त्वां कथं नु मुमुचे जरती सा ॥ ४८ ॥

किं त्वमेव मलयध्वजकन्ये-
त्यालपन्त्यभिमृशन्ति कराग्रैः ।
आशिषश्च ददते शतशो या-
स्ता यथायथमुपाचरदेषा ॥ ४९ ॥

यत्र यत्र परिपश्यति बाला
पादपान्क्षितिभृतः सरितो वा ।
तत्र तत्र निभृतार्पितदृष्टिः
कौतुकेन पथि सा चिरमासीत् ॥ ५० ॥

तावती किल चमूरपि तस्याः
संकुले पथि शनैः प्रचलन्ती ।
पार्श्वतो न विदधे पदमात्रं
पात्रमध्यपतिता तटिनीव ॥ ५१ ॥

नाददे पथि फलानि न चेक्षू-
 न्का कथावतरणे कलमेषु ।
पुष्पगन्धमपि मारुतनीतं
 जिघ्रति स्म पृतना चकितास्याः ॥ ५२ ॥

किं घसेम जलधीन्मुखवातैः
 किं क्षिपेम नखरैर्गिरिकूटान् ।
इत्यखण्डितचलद्रणकण्डू-
 दुर्मदैरगणि तत्र चमूपैः ॥ ५३ ॥

यावदम्बरमणिर्दिनमध्यं
 नाधिरोहति सुदुर्विषहोष्मा ।
तावदेव सुमतिर्हृदयज्ञो
 विश्रमाय बलमादिशदश्वाः ॥ ५४ ॥

नालिकेरपनसक्रमुकाम्र-
 स्पर्धमानकदलीक्षुवणायाम् ।
तीरसीमनि कवेरसुताया-
 स्तद्बभूव शिबिरं शफराक्ष्याः ॥ ५५ ॥

प्राग्गतैरधिगतैः प्रविभज्य
स्थापितेषु पटवेश्मसु तस्मिन् ।
स्वं स्वमेत्य विजयध्वजचिह्नं
निर्विवादमविशन्बलमुख्याः ॥ ॥ ५६ ॥

विस्तृताभिरभितो विपणीभि-
र्वेश्मभिश्च विपुलैः सकलानाम् ।
अन्वयादिव पुरी मधुरेव
स्वामिनीं पटनिकेतमयी ताम् ॥ ५७ ॥

स्वेदरञ्ज्यदलिकान्तनिमज्ज-
द्धूसरालकतयाधिकदृश्यम् ।
आननं विकसितेक्षणमस्या
ध्यानमङ्गलमभूद्भुवनानाम् ॥ ५८ ॥

सावतीर्य शिबिरप्रतिहारे
सैनिकान्समनुगृह्य कटाक्षैः ।
कल्पितं सुमतिना बहुकक्ष्यं
पाण्डरं पटगृहं प्रविवेश ॥ ५९ ॥

आवृतं बहुभिरावरणैस्त-
दीर्घिकोपवनशोभितमन्तः ।
सा मणीकलशसंभृतमुच्चै-
र्दर्शितं सुमतिना विलुलोके ॥ ६० ॥

अत्युदारमवबद्धवितानं
क्लृप्तमञ्चमुपबर्हविशोभि ।
धूपितं कुसुमदामसुगन्धि
प्राविशच्छयनमन्दिरमम्बा ॥ ६१ ॥

यत्सहस्रदलमागमगम्यं
पङ्कजं विमलचिन्मयमस्ति ।
न्यञ्चितं तदिव कौतुकहेतोः
पाण्डरं पटगृहं शुशुभेऽस्याः ॥ ६२ ॥

सा निविश्य मृदुले शयनीये
संविसृज्य सुमतिं शुभयोक्त्या ।
अध्वखेदमवरोपितभूषा
सँल्लपन्त्यपजहार सखीनाम् ॥ ६३ ॥

विश्रमय्य बलमेतदुपेतं
संनिपात्य च चमूमनुयान्तीम् ।
श्वो निषद्य सुखमत्र परश्वो
याम इत्यभिदधे सचिवेन ॥ ६४ ॥

संवृते पयसि सह्यसुताया
भित्तिभिर्नवदुकूलमयीभिः ।
क्लृप्तमज्जनविधिः सवयोभिः
सोपसज्य विजहार कुमारी ॥ ६५ ॥

मुक्तपल्ययनविश्रमिताश्वं
स्रस्तबन्धसुखितद्विपसङ्घम् ।
स्नातपीतसुखसुप्तभटं त-
च्छासनेन सुमतेर्बलमासीत् ॥ ६६ ॥

सापरेद्युरधिरुह्य तुरंगं
संचरन्त्यवनिपालकुमारी ।
तृप्तिमाप न कवेरसुतायाः
कामनीयकमवेक्ष्यमवेक्ष्यम् ॥ ६७ ॥

तत्प्रतीरभुवि केरतरूणां
हस्तलभ्यमुपयुज्य फलाम्भः ।
निर्जरा विधुकलामृतभागा-
नापिबन्ति सकृदौषधरीत्या ॥ ६८ ॥

तज्जलं निपतितं क्वचिदन्त:
स्तब्धमास्त किल यत्र पयोधेः ।
तत्प्रदेशविषयस्तनुभाजा-
मिक्षुसारजलधिव्यवहारः ॥ ६९ ॥

सा वहेत यदि सर्वपथीना
किं न सा त्रिपथगार्धममुष्याः ।
अर्थमेनमवबुध्य जनास्ता-
मर्धजह्नुतनयेति गृणन्ति ॥ ७० ॥

तामगस्त्यगृहिणीं परिणम्रां
तत्र सिन्धुवपुषा गृणती सा ।
नन्वियं भवति नो गुरुपत्नी-
त्यादरं दृढमधत्त सखीनाम् ॥ ७१ ॥

सा तु दिव्यसरितोऽपि विशिष्टां
प्रीतिमातनुत सह्यसुतायाम् ।
सा ह्यसात्त्विव यतो न सपत्नी
तेन तत्र तु गुरोर्गृहिणीति ॥ ७२ ॥

स्वर्गमाहुरवगाहफलं यं
सोऽपवर्ग इति मे मतिरस्याम् ।
स्वर्गतोऽपि मधुरां भजतां तां
स्वर्ग इत्यभिमतं किमिवान्यत् ॥ ७३ ॥

सा हयेन विशदेन चरन्ती
संपरीत्य सकलं कटकं तत् ।
आसदत्पटकुटीमनु सायं
सैनिकैः परिमितैरनुयाता ॥ ७४ ॥

प्रस्थितां परिचरन्पथि देवीं
सेवया विविधया सुमतिस्ताम् ।
एक एव बहुधा परिणेमे
यामिकश्च सचिवश्च भटश्च ॥ ७५ ॥

दिग्जयाय चलितामथ देवीं
तां निशम्य शतशो धरणीशाः ।
संप्रगृह्य विविधानुपहारा-
नाययुः शरणमर्थयमानाः ॥ ७६ ॥

सूक्तिभिः सुमतिसंक्रमिताभि:
स्वां चिरात्प्रवणतां भगवत्याम् ।
ते निवेद्य दययानुगृहीताः
संनिधिं समुपजग्मुरमुष्याः ॥ ७७ ॥

कीर्णरत्नकुसुमाञ्जलयस्ते
वाहनानि च धनान्युपहृत्य ।
सूचिताः सुमतिना स्वयमस्याः
पादपीठनिकटे प्रणिपेतुः ॥ ७८ ॥

मा बिभीत सुखिनः प्रतियाते-
त्याकलय्य मृदुलां गिरमस्याः ।
उत्थिता गिरमवादिषुरित्थं
ते निरीक्षितपरस्परवक्त्राः ॥ ७९ ॥

माद्दशेषु मलयध्वजदेवो
यामधत्त करुणां करुणाब्धिः ।
सा त्वया शतगुणा निहितैवं
किं तु किंचिदिदमस्ति निवेद्यम् ॥ ८० ॥

अर्पितात्मसु सदा कुलदासे-
ष्वस्मदादिषु च सत्सु भटेषु ।
स्वामिनी यदि विधित्सति यात्रां
का यशःक्षतिरितोऽपि कुले नः ॥ ८१ ॥

तत्प्रयातु भवती पुनरम्बा-
मस्तु चैष सुमतिः स्थपतिर्नः ।
त्वत्प्रसादकणिकामवलम्ब्य
गोचरानपि समानमयामः ॥ ८२ ॥

ईदृशा भवथ यूयमिमां क्ष्मां
द्रष्टुमेव तु वयं चलिताः स्मः ।
कौतुकं तु यदि वः सह याते-
त्यन्वशात्सदसि सा नरपालान् ॥ ८३ ॥

भूषणैः सुमतिहस्तवितीर्णै-
र्वाहनैर्बहुविधैश्च नृपालान् ।
सा यथाक्रममिमान्बहुमत्य
व्यादिदेश कटकावतराय ॥ ८४ ॥

तां वाक्येषु गभीरतामथ च तां कालोचितार्थज्ञतां
तां नम्रेषु कृपालुतामपि च तां कीर्तौ परं लुब्धताम् ।
संपश्यन्प्रमदाद्भुतव्यतिकरस्तब्धस्त्वमात्योऽसकृ-
त्पादेऽस्याः प्रणनाम वत्सलतया प्रायुङ्क्त चाप्याशिषः ॥

त्वत्साचिव्यबलानतान्क्षितिभुजस्त्वाच्छिक्षितैरक्षरै-
स्त्वत्सांनिध्यबलात्किलेदमवदं किंचिद्यथोपस्थितम् ।
कर्तव्यं यदितोऽपि तत्र सुमते कामं प्रमाणं भवा-
नित्युक्त्येयमपाचकार निखिलं सेवाश्रमं मन्त्रिणः ॥

इति अष्टमः सर्गः ॥



# नवमः सर्गः ॥

तां गीतसंवलितमर्दलवेणुवीणा-
नादामृताधिगमितस्वपनां सखीभिः ।
वैतालिका इव सुशिक्षिततारवाचः
प्राबोधयन्मृगदृशः कतिचित्प्रभाते ॥ १ ॥

अम्ब त्वदभ्युदयतो निहतं पुरैव
हन्तुं तमः पुनरसावरुणः समुद्यन् ।
सुप्रातमावहति देवि रथाङ्गनाम्नां
साजात्यरक्तचरणायुधबोधितानाम् ॥ २ ॥

आयास्यतो दिनमणेरभिकस्य वार्तां
प्राभातिकानिलमुखादवधारयन्ती ।
उद्दण्डपङ्कजतया किल पद्मिनीय-
मुद्ग्रीविकां वहति वासकसज्जिकेव ॥ ३ ॥

पत्युस्त्विषां प्रथमनिर्गलितैर्मयूखै-
ध्वान्तेर्ष्यया मलिनदर्शमनुद्रवद्भिः ।
उच्चाटिता मधुकृतोऽपि किमुत्पलेभ्यः
पर्याकुलास्तत इतोऽपि परिभ्रमन्ति ॥ ४ ॥

हंसेषु कञ्चुकिषु षट्चरणेषु कुब्जे-
ष्वादेशहारिषु मरुत्सु च संगतेषु ।
उद्घाटयन्त्यधिकृता इव शार्ङ्गपाणे-
रन्तःपुरं घटितमंशुमतो मयूखाः ॥ ५ ॥

उन्मुद्रिते सति मनागरविन्दकोशे
भृङ्गैरहंप्रथमिकाकलितप्रवेशैः ।
आस्कन्द्यमानमपि सौरभमेकतस्त-
दादाय यान्त्यपरतो मरुतो यथेच्छम् ॥ ६ ॥

भूदेवमन्त्रितविमुक्तजलाञ्जलिभ्यो
निर्गत्य दैत्यहननाय समन्ततोऽपि ।
आसीदतामिव रविं महसा पवीनां
पौरन्दरी हरिदियं परिपिञ्जरासीत् ॥ ७ ॥

अम्भोनिधेस्तपनवाजिभिरुज्जिहानै-
राधूतकन्धरसटैरसकृद्विकीर्णा ।
सामुद्रविद्रुमलताशकलावलीयं
प्राचीमुखे विजयते न तु सान्ध्यरागः ॥ ८ ॥

निर्जित्य विश्वमखिलं मकरध्वजेन
निर्गच्छता शिबिरसीमनि दीपितस्य ।
मन्यामहे हुतभुजः प्रथमप्रकाशो
मारुत्वते जयति संप्रति दिग्विभागे ॥ ९ ॥

जैत्रप्रयाणसमयं त्वयि वक्तुकामः
प्रायः प्रबोधसमयं प्रतिपाल्य भानुः ।
उन्मज्ज्य सागरजलादुदयाद्रिशृङ्गे
लीनः क्वचिन्न किल दर्शयतेऽधुनापि ॥ १० ॥

आमोदते बत कियत्कमलाकरोऽय-
मस्मिन्नपि प्रविकसत्यरविन्दकोशे ।
उन्मुद्रय त्वमधुना नयनारविन्द-
मामोदतामखिलमम्ब जगत्त्वयेदम् ॥ ११ ॥

सुप्रातमस्तु मलयध्वजकन्यकायाः
सुप्रातमस्तु मधुरापुरवल्लभायाः ।
सुप्रातमस्तु विधुवंशपताकिकायाः
सुप्रातमस्तु हरितां जगतां त्रयाणाम् ॥ १२ ॥

इत्युक्तिभिर्मृगदृशां प्रतिबोधिता सा
निर्वर्त्य नैत्यिकविधिं नृपतेः कुमारी ।
सज्जीकृतं सुमतिना सकलं बलं त-
त्प्रस्थाप्य पार्थिवकुलानुगता प्रतस्थे ॥ १३ ॥

अत्यद्भुतो विजयदुन्दुभिनादमन्त्र-
स्तस्या नृपालकुलकर्णपथावतीर्णः ।
अस्तम्भयद्व्यधमदाचकृषे जघान
निन्ये वशं व्यघटयच्च यथायथं तान् ॥ १४ ॥

भेरीरवश्चलति योजनमेव याव-
त्तावत्ततो दशगुणं चलितः प्रतापः ।
कीर्तिस्ततो दशगुणं व्यचलत्ततोऽपि
चेलुस्ततो दशगुणं विमता विदूरे ॥ १५ ॥

वार्ताहरा दिशि दिशि प्रहिता हि याव-
दागत्य मन्त्रिणि न तं तमुदन्तमाहुः ।
तावत्त एव धरणीपतयः सदाराः
सोपायनाः शरणमीयुरिमां सबालाः ॥ १६ ॥

आगच्छतां प्रणमतां वदतां प्रियोक्ती-
रग्रे निधाय विविधानुपहारभेदान् ।
राज्ञामनुग्रहकृते सुमहान्विलम्बो
मार्गेऽभवत्प्रतिपदं मधुरेश्वरायाः ॥ १७ ॥

राज्यं प्रशासति पुरा मलयध्वजे ये
भूमीभुजः कतिपयेऽपरराधुरज्ञाः ।
तानप्यनन्यशरणान्ससुतान्सदारा-
न्सा चक्षुषानुजगृहे शरणं प्रपन्नान् ॥ १८ ॥

सा तत्र तत्र शरणागतराजलोक-
विश्राणितानि मणिहेमविभूषणानि ।
मातुः समक्षमखिलान्युपहारयन्ती
कीर्तिम् परां वितरति स्म दिशां मुखेषु ॥ १९ ॥

दुर्गाटवीनगरराष्ट्रपदानि तैस्तै-
स्त्यक्तानि युद्धनिहतैश्च पलायितैश्च ।
भृत्येषु सा कुलपरम्परयागतेषु
न्यासीचकार सचिवानुमतेषु राज्ञी ॥ २० ॥

नासीरसीमपरिवर्तिभिरेव योधै-
र्विद्रावितान्विनिहतानपि वा गृहीतान् ।
सा शृण्वती नरपतीनपि नात्यहृष्य-
त्संग्रामदर्शनकुतूहलिनी कुमारी ॥ २१ ॥

त्यक्तान्भयात्प्रचलितैः पितृभिः स्वभेरी-
भाङ्कारनिर्लुठितगर्भपरिच्युतांश्च ।
सा दर्शितान्पथि शनैरवलोकयन्ती
स्वे स्वे पदे नृपशिशून्पुनरभ्यषिञ्चत् ॥ २२ ॥

राज्यश्रियं प्रणिपतत्सु नरेश्वरेषु
रत्नानि हेमनिवहानपि भूसुरेषु ।
कीर्तिं प्रतापमपि सा हरितां मुखेषु
राजाधिराजतनया विकिरन्त्ययासीत् ॥ २३ ॥

संभ्रान्तनिष्पतिततत्तदरातिराज-
शुद्धान्तयौवतजनैः पतिपुत्रभिक्षाम् ।
सा भिक्षितानुजगृहे करुणातरङ्ग-
संपातशीतलसमुल्लसितैरपाङ्गैः ॥ २४ ॥

पाषण्डसागरनिमज्जदनादिसूक्ति-
निस्तारणाय धृतमानुषविग्रहायाः ।
मीनो महान्विरुरुचे विजयध्वजेऽस्या
नासीरसीमनि नरेन्द्रकुमारिकायाः ॥ २५ ॥

बाहुप्रतापविजिताभिररातिराज-
राज्येन्दिराभिरिव राजसुता सखीभिः ।
पर्यावृता पितृपितामहपालितोर्वी-
सीमापरिष्करणमाप तुषारशैलम् ॥ २६ ॥

प्रालेयशैलशिखरादवनौ निपत्य
भागीरथीं कनखलं परितो वहन्तीम् ।
दृष्ट्वैव सा स्वयमभूज्जननान्तरीय-
सोदर्यताप्रणयविद्रवदन्तरङ्गा ॥ २७ ॥

स्रोतांसि तानि कबलीकृतदिङ्मुखानि
यादांसि तत्र च महान्ति समुल्ललन्ति ।
अप्रेक्षितश्रुतचराण्यवितर्कितानि
चित्रार्पितेव चिरमैक्षत पाण्ड्यकन्या ॥ २८ ॥

प्रागेव पाण्ड्यतनयाचरणारविन्द-
सेवानुभावचिरनिर्हृतकल्मषासु ।
सेनासु तत्र जलमात्रकृतोपयोगा
ह्रीणेव सा सरिदवापदवाङ्मुखत्वम् ॥ २९ ॥

आलक्ष्यताममरसिन्धुमपारपूरां
स्रोतोदशां स्वयमपि प्रतिपद्य सद्यः ।
अम्भोनिधिर्न्यविशतेव तटे तदीये
सेनानिभेन मलयध्वजकन्यकायाः ॥ ३० ॥

सेनां पृथक् पृथगिमां विरलं निवेश्य
मायापुरीपरिसरे सुमतिः समस्ताम् ।
आसाद्य पाण्ड्यतनयामिदमाबभाषे
गङ्गातरङ्गलतिकाहृतदृक्तरङ्गाम् ॥ ३१ ॥

पश्याम्ब कीर्तिमिव ते भुवनं पुनाना-
मेनां दयामिव तवास्खलितप्रवाहाम् ।
सूक्तिं तवेव च सुधामधुरां गभीरां
भागीरथीं भवजटापटलात्प्रवृत्ताम् ॥ ३२ ॥

निश्रेणिकेयमपवर्गपदाधिरोहे
नौकेयमम्ब दुरितार्णवसंप्रतारे ।
एषा सुधा भवविषज्वलनाभिषङ्गे
ज्योत्स्नेयमान्तरतमोभिभवे जनानाम् ॥ ३३ ॥

ब्रह्मर्षिशापनिहतान्भसितावशेषा-
नेषा दिवं सगरराजसुताननैषीत् ।
एषा च कर्मधरणीघटनानपेक्षा
स्रोतस्त्रयेण भुवनत्रितयं पुनीते ॥ ३४ ॥

कर्माणि पश्यत हरेरिति घोषयन्ति
यत्सेतुबन्धनमुखानि गिरः पुराण्यः ।
सोऽप्यर्णवो ननु रसातलमाविशन्त्याः
पार्श्वाम्बुलेशपरिवर्तनपूरितोऽस्याः ॥ ३५ ॥

नीहारभूधरशिलावलयाभिघात-
निर्गच्छदच्छजलशीकरनिर्विशेषैः ।
अम्बावधेहि कनकध्वजमात्रलक्ष्यै-
रेतां वृतां दिविषदामभितो विमानैः ॥ ३६ ॥

आस्तामदृष्टमदसीयमिहानुभाव्यं
दृष्टं च किं क्वचन दृष्टमथ श्रुतं वा ।
या यादृशीयमथ यासि च यादृशी त्वं
ते द्वे युवां परमिह व्यतिसंविदाथे ॥ ३७ ॥

एतावती जननि भारतवर्षभूमि-
रेषैव ते कुलपरम्परयागता भूः ।
स्नानेन पावनजलामपि पावयित्वा
भूयोऽप्यमूं प्रतिनिवर्तितुमौचिती वः ॥ ३८ ॥

इत्यालपन्तमियमाह तमेवमेत-
न्मन्दाकिनीं प्रति यथात्थ महामते त्वम् ।
लब्धस्थिरीकरणमात्रभवं यशस्तु
संचिन्त्यमानमयशःपरिहार एव ॥ ३९ ॥

एनां विगाह्य तदशेषतमोपहन्त्री-
मेतद्बलेन सुरसिद्धनिषेवितानि ।
वर्षाणि तावदितराण्यपि साधयेयं
सेनामिहैव विनिवेश्य भवत्सहाया ॥ ४० ॥

त्वत्पादसेवनकृतां त्रिदिवे करस्थे
का नाम भूमिवलयाक्रमणेऽपि शङ्का ।
साह्याय किं तव चमूरनुयायिनीयं
त्याज्या तु नेति समयोचितमाह सेनाम् ॥४१॥

अम्बा तथेति गिरमभ्युपगम्य तस्य
संनह्यतामिति च सा पृतनां नियुज्य ।
सस्नौ भवाङ्गपरिरम्भकृतार्थमम्भ-
स्त्रैस्रोतसं किल पुनश्च कृतार्थयन्ती ॥ ४२ ॥

यद्ब्रह्मणोऽभिभवनं सलिलात्मना प्रा-
ग्यश्चाथ शन्तनुभुवां सलिलापवेधः ।
अंहो निरन्वयममृज्यत तत्समस्तं
तस्यास्त्रिलोकजननीचरणार्पणेन ॥ ४३ ॥

सा संवृता नृपसुता परितः सखीभिः
स्नानाय गाङ्गसलिले कलितावतारा ।
स्नान्तीभिरत्र सुरपन्नगकन्यकाभिः
संयुज्य मज्जनकुतूहलिनी विजह्रे ॥ ४४ ॥

सख्यो नृपालदुहितुर्विहृतिच्छलेन
नेत्रे पिधाय बधिराः फणिराजकन्याः ।
स्मेराननासु परितः सुरसुन्दरीषु
स्वैरं किलापजहसुः श्रवणव्यपायात् ॥ ४५ ॥

संसारसिन्धुतरणिस्तरणिं विनैव
सा दूरमप्लवत तत्र समं सखीभिः ।
प्रागार्जितं वितरणित्वकृतं यशो य-
त्तेनाधुना द्विगुणितं तदभूदमुष्याः ॥ ४६ ॥

उद्दामनिश्वसितसौरभसारलोभा-
दुन्मज्जनावसरमेव चिरं प्रतीक्ष्य ।
तं देशमप्रजहती भ्रमरावलीव
स्नान्त्या बहिर्विरुरुचे कबरी श्लथाख्याः ॥ ४७ ॥

सा नन्दनोपवनचन्दनमङ्गराग-
 मालिम्पती समुपदर्शितमप्सरोभिः ।
सस्नौ यदा सुरसरित्सलिले तदैव
 चक्रे सुरद्रुमसमाहरणावसायम् ॥ ४८ ॥

इत्थं विहृत्य सलिले सुचिरं सखीभि-
 रुन्मज्ज्य नैत्यिकविधेरनु पाण्ड्यकन्या ।
तां सेतुना प्रथमतः सरितं ततार
 नौकासहस्रनिबिडाकलितेन राज्ञी ॥ ४९ ॥

अस्मादपादपि चमूरधिगङ्गमस्या
 मेने कमप्यतिशयं न तु तावता सा ।
राजीवबान्धवरथे वसतो जनस्य
 को नाम दीपसमवायकृतः प्रकाशः ॥ ५० ॥

आदाय पुष्करमुखैरभितो विकीर्य
 यावत्किल व्ययितमम्बु सुरस्रवन्त्याः ।
तावत्ततो द्विगुणमप्यभिवर्षति स्म
 दानोदकैर्द्विपगणः परितः स्तुतैस्ताम् ॥ ५१ ॥

मातङ्गपुंगवतुरंगशताङ्गयोध-
पाणिन्धमे धरणिसेतुपथे चरन्ती ।
नक्तंदिवैस्त्रिभिरशिश्रयदभ्रसिन्धोः
पारं परं निरवशेषमनीकिनी सा ॥ ५२ ॥

सा संनिपात्य सकलामपि वाहिनीं ता-
माज्ञां वितीर्य च गिरेरधिरोहणाय ।
आलीजनाकलितसारथिकर्मसुस्थं
कर्णीरथं कमपि तु स्वयमारुरोह ॥ ५३ ॥

तां वाहिनीं सुमहतीमपदिश्य तस्या
गङ्गेव तं गिरिवरं पुनरारुरोह ।
प्रस्थानसंभ्रमवशादनिवेदितं प्रा-
गवक्तव्यशेषमिव किंचन वक्तुमीशे ॥ ५४ ॥

नीहारशैलशिखरेषु समुत्पतन्तो
निम्नोन्नतानि कियदप्यविचारयन्तः ।
जग्मुः शताङ्गयुगसंयमितास्तुरंगा
देव्याः सुखं नयनरश्मिभिरुद्गृहीताः ॥ ५५ ॥

प्रस्निग्धकाशकुशकाननमेदुराणि
भागीरथीसलिलपातपवित्रितानि ।
स्थानानि संयमवतामतिसुन्दराणि
सव्यानि सा विदधती शनकैरयासीत् ॥ ५६ ॥

रत्नानि तत्र वणिजो भिषजोऽग्रहीषु-
र्दिव्यौषधीर्गजवरानपि राजकीयाः ।
अस्मादृशाः क्षितिसुराः पुनराहरन्न
भागीरथीतटरुहाणि कुशाङ्कुराणि ॥ ५७ ॥

आमुक्तकञ्चुकमधिज्यशरासकाण्ड-
मुन्नद्धकुन्तलनियन्त्रितवन्यपुष्पम् ।
सेनारजोमसृणितालकसुन्दरं त-
त्त्वं परं वनचरैरपि तत्र दृष्टम् ॥ ५८ ॥

दुर्लङ्घतत्पथविलङ्घनकौतुकिन्याः
कोलाहलेन महता परितो ध्वजिन्याः ।
यद्यद्विभिद्य पतितं शिखरं हिमाद्रे-
स्तत्तन्नवेन यशसा समपूरि तस्याः ॥ ५९ ॥

नासीरसंगतभटोद्भटसिंहनाद-
विद्रावितान्गिरिगुहाशयितान्मृगेन्द्रान् ।
वन्यद्विपाः समभिदुद्रुवुरात्मवैर-
निर्यातनावसरलाभनितान्तहृष्टाः ॥ ६० ॥

माध्वीकमिश्रनववैणवसक्तुभक्तैः
कस्तूरिकाहरिणमांसकृतोपदंशैः ।
आतिथ्यमापुरुचितं शबरालयेषु
सेनाभटाश्चमरवालधिवीज्यमानाः ॥ ६१ ॥

पारीन्द्रनिर्दलितकुञ्जरकुम्भमुक्त-
मुक्ताफलग्रथितहारकृतोपहाराः ।
स्थानानि तत्र विविधान्युपदर्शयन्तो
देवीमसेविषत हैमवताः किराताः ॥ ६२ ॥

अत्रैव नः कुलपतिं धनुषा जघान
मर्त्यः स कश्चिदिति वृद्धजना वदन्ति ।
दूरे सुवर्णकदलीवनमेतदम्ब
जीर्णः कपिर्वसति यत्र चिराय कोऽपि ॥ ६३ ॥

नाचक्षते न निमिषन्ति न निश्वसन्ति
वल्मीकतः प्रसृमरा वपुषा तु मर्त्याः ।
सन्ति द्रुमा इह शतं दलपुष्पहीना-
श्छित्वा नयाम यदि देवि दिदृक्षसे तान् ॥

अस्त्यम्बिकेति ननु गोत्रपितामही नः
कोदण्डदण्डकुशला गतभाव्यभिज्ञा ।
कान्त्या गिरा करुणया च भुजोष्मणा च
दृग्भ्यां शपेमहि महेश्वरि सैव नस्त्वम् ॥ ६५ ॥

बाहुस्त्वयावममृशे प्रथमं पुरो न-
स्तद्बाहुसारविजितो भविता पतिस्ते ।
सत्यानि विद्धि शबरीजनभाषितानि
जात्वम्ब चिन्तय न जानपदानिवास्मान् ॥ ६६ ॥

इत्थं सदारशबरोक्तिकृतस्मितासु
राज्ञी सखीषु कृतनर्मवचोविलासा ।
मा जातु खण्डयत मानुषपादपानि-
त्याज्ञाप्य तानतियया शनकैर्हिमाद्रिम् ॥ ६७ ॥

शार्दूलसिंहशरभद्विरदाच्छभल्ल-
वाहद्विषद्वृकवराहपराहतेषु ।
शृङ्गेषु मार्गरहितेष्वपि सा हिमाद्रेः
सेना जगाम सुरसिन्धुमनुद्रवन्ती ॥ ६८ ॥

इत्थं हिमाद्रिशिखरादवतीर्य मन्दं
वर्षेऽथ किंपुरुषनामनि सा विशन्ती ।
नोदन्ययोपससृजे न बुभुक्षया वा
नाध्वश्रमेण पृतना न च घर्मतोयैः ॥ ६९ ॥

अज्ञातमेघजलमश्रुतसस्यभेद-
मर्थोपसंग्रहणदानकथानभिज्ञम् ।
देशं समीक्ष्य सुमतिर्धृतविस्मयोऽपि
कामं बभूव स करग्रहणे निराशः ॥ ७० ॥

स्वच्छानि भौमसलिलानि सुधाधिकानि
सौरभ्यवन्ति च फलानि महीरुहाणाम् ।
दृष्ट्वैव तृप्तिभरितेषु चमूचरेषु
कौतूहलेन जगृहुः कतिचित्तु तानि ॥ ७१ ॥

सन्त्यद्भुता द्रुमलता मृगपक्षिभेदाः
सन्ति स्त्रियोऽपि सुरयौवतनिर्विशेषाः ।
किं तु क्षितिं विमलसत्त्वमयीं गतास्तां
न क्वापि लोभमलभन्त चमूचरास्ते ॥ ७२ ॥

धन्याञ्जटापटलनीडसुखप्रसुप्त-
नानाविहङ्गकुलनादविनीतखेदान् ।
अध्यात्मयोगनिरताननुगृह्णती सा
मन्दं जगाम जननी जगतां त्रयाणाम् ॥ ७३ ॥

कालाद्गुहोर्मुनिकुलेन कथंचिदन्त-
र्नीवारशूकवदलक्ष्यत केवलं यत् ।
तद्दृश्यते स्म तरुणारुणकोटिदीप्रं
कान्तामयं कलितकार्मुकमात्मतत्त्वम् ॥ ७४ ॥

उच्चावचैः शमधनाः पृतनाचराणां
कोलाहलैः श्रुतिगणैरिव बोध्यमानाः ।
कन्दं फलं सलिलमप्युपजह्रिरे य-
त्तत्संप्रगृह्य बुभुजे स्वयमम्बिका सा ॥ ७५ ॥

सा तद्व्यतीत्य समुपेत्य च हेमकूटं
तेनाध्वना च हरिवर्षमनुप्रपन्ना ।
तस्योत्तरं निषधभूधरमारुरोह
प्राक्पश्चिमार्णवतरङ्गकृताभिषेकम् ॥ ७६ ॥

तस्मिन्गिरौ प्रचलिता पथि पश्चिमे सा
मेरुं प्रदक्षिणतया परिवेष्टयन्ती ।
वासं किटेः क्रतुमयस्य हि केतुमालं
वर्षं निनाय बलमुच्छ्रितकेतुमालम् ॥ ७७ ॥

भक्त्या प्रणम्य भगवन्तमभिष्टुता सा
विघ्नेन तेन वसुधाभरणश्रमाणाम् ।
तद्दर्शितेन च पथा समवाप नीलं
शैलं निजेन यशसा विशदं समन्तात् ॥ ७८ ॥

सा रम्यकं समतिलङ्घ्य हिरण्मयं च
श्वेतं च शृङ्गिणमतीत्य महीधरौ द्वौ ।
प्राप्तोत्तरानथ कुरून्प्रयता ववन्दे
पाण्ड्यात्मजा भगवतः प्रथमावतारम् ॥ ७९ ॥

ये नोदहारिषत वन्दिगणाः स्वकीया
जैत्रध्वजो जयति यश्च निजे शताङ्गे ।
तेनादृता तदुपदर्शितमालुलोके
सा तत्र वारिनिधिमुत्तरमुत्तरङ्गम् ॥ ८० ॥

प्रागेव ये कृतपदा यशसां प्रपञ्चाः
स्वोपार्जिताः पितृपितामहसंभृताश्च ।
स्वं द्रष्टुमभ्युपगतानिव तानशेषा-
न्सा तत्र तत्र समवैक्षत फेनकूटान् ॥ ८१ ॥

पश्चात्समुद्यति रवौ कुरुषूत्तरेषु
प्रागेव दक्षिणमिमं विदती पयोधिम् ।
उन्मज्जतात्र तिमिना नलसेतुनेव
निःसंशयं व्यवजहार वरूथिनी सा ॥ ८२ ॥

अभ्युद्यतैस्त्रिभुवनाक्रमणेच्छयेव
प्राप्तैः प्रतीरमपि वारिनिधेस्तरङ्गैः ।
लिल्ये समुल्लसदसंख्यतुरंगमस्या
वीक्ष्य ह्रियेव विपुलं बलमन्तिकस्थम् ॥ ८३ ॥

अम्भोधरेषु सलिलग्रहणावतीर्णे-
ष्वारात्प्रतिद्विपरुषा चलितान्निहन्तुम् ।
आधोरणा जगृहुरङ्कुशसंप्रहारैः
सेनागजान्धुरि नरेन्द्रकुमारिकायाः ॥ ८४ ॥

तस्मिन्दिशां विजयकर्मणि धाविता ये
ये चाहवेष्वभिमुखं निहताः स्वयोधैः ।
तानर्णवे च तटसीम्नि च तत्र राज्ञो
लब्धास्पदान्युगपदैक्षत पाण्ड्यकन्या ॥ ८५ ॥

पर्णाशनैः शमधनैः पनसाम्रजम्बू-
प्लक्षाशनैरपि च जानपदैर्वृतेषु ।
वर्षेषु तेष्वनधिगत्य करं चरन्ती
देवी चकाङ्क्ष जलधेरुपदां ग्रहीतुम् ॥ ८६ ॥

यावत्परामृशति सा न करेण मौर्वीं
यावद्दधाति च निषङ्गमुखे न दृष्टिम् ।
तावत्प्रगृह्य विविधानुपहारभेदां-
स्तामर्णवः शरणमेत्य वचो बभाषे ॥ ८७ ॥

मुक्तापगा विशति दक्षिणमम्बुराशिं
जम्बूनदी विशति पूर्वमहं तु रिक्तः ।
वेदान्विचेतुमुपशोधितगर्भसारः
साक्ष्यत्र मे स भगवान्ननु मत्स्यराजः ॥ ८८ ॥

त्वद्बाहुसारविजितैर्जठरं गतैर्मे
भूपालकैरवगता ह्यसि भूयसा त्वम् ।
सत्यप्रियासि शरणागतवत्सलासी-
त्यानीतमेतदियमम्ब चिराभिगुप्तम् ॥ ८९ ॥

मैनाकभूधरचरास्त इमे गजेन्द्रा
द्वीपे गभस्तिमति रत्नगणोऽयमासीत् ।
शङ्खा इमे जननि पश्चिमसिन्धुनीता
येषां प्रकाममवमः स हि पाञ्चजन्यः ॥ ९० ॥

इक्षूदधेरुपहृताः कमठाश्च मत्स्याः
पक्वा इमे गुडरसाः परिशोषिता वा ।
हैयङ्गवीनमकरा इति संप्रतीता
एते पुनर्जननि याचितका घृताब्धेः ॥ ९१ ॥

एषा जरापलितरोगविषादहन्त्री
दिव्या सुरोदधिहृता मदिरा सुगन्धिः ।
दध्यर्णवादुपहृतं नवनीतमेत-
न्नाद्यापि वेद तदिदं नवनीतचोरः ॥ ९२ ॥

क्षीराब्धिनोपददिरे तुरगा गजाश्च
क्षीराशिनः सुविमलानवधारयेमान् ।
एकं तु तच्छकलमैन्दवमास्त दत्तं
प्रागेव तद्भगवते प्रमथाधिपाय ॥ ९३ ॥

सन्ति स्त्रियः कतिचिदत्र सखीरिमास्ते
संपश्यता न तु मया समुपाहृतास्ताः ।
त्वं कामधेनुरसि कल्पलतासि च त्वं
नाहारि तद्द्वितयमम्ब विडम्बनेति ॥ ९४ ॥

ताम्रापगासलिलपानसुनिर्वृतानां
किं कार्यमस्ति सुधया मधुरोदतो वा ।
मातस्तथाप्युपहृता मणिराशयोऽमी
त्वच्छासनश्रमविनोदपदे नतेन ॥ ९५ ॥

सामुद्रदिव्यमणिजातिषु कौस्तुभश्च
चिन्तामणिश्च भुवने विदिते मणी द्वे ।
अन्यादृशी जननि हारलतेयमेनां
वैवाहिकोत्सवविधौ वह मद्विभूत्यै ॥ ९६ ॥

इत्थं निवेद्य निहितानुपहारभेदा-
न्हारं वितीर्य च करे विनतं पुरस्तात् ।
उत्थाप्य सा सुमतिना पतिमापगाना-
मम्बा जगाद वचनैरमृतावसिक्तैः ॥ ९७ ॥

सख्याः श्रियो मम यतो जनकोऽसि ताव-
त्तद्धर्मतोऽसि जनको मम च त्वमेव ।
दत्तं त्वयाभरणमेतदिति ब्रुवाणा
सा तं पुपोष नयनाञ्चलचन्द्रिकाभिः ॥ ९८ ॥

सा तं विसृज्य समुपेत्य च पूर्ववर्षं
भद्राश्वमत्र च नदीमतिलङ्घ्य सीताम् ।
तत्तीरसीमनि तपो विपुलं चरन्त-
मश्वाननं पुरुषमाद्यमसौ ववन्दे ॥ ९९ ॥

सा च स्वदर्शनकृतार्थतपःप्रबन्धा-
दश्वाननाद्भगवतो वरमातिथेयात् ।
आसेदुषी विजयमप्रतिघातमग्रे
जम्बूनदीप्रभवमापदिलावृतस्थम् ॥ १०० ॥

यान्युत्तरेषु कुरुषु प्रभवन्ति यानि
जम्बूनदीपयसि यानि सुमेरुमूले ।
स्वर्णानि तानि सुमतिः पृथगानिनाय
वर्णोत्तराण्यननुभूततया न लोभात् ॥ १०१ ॥

जम्बूनदीपयसि सर्वसुवर्णभूते
सेनाभटा अनवधारितवर्णभेदाः ।
शैवालफेनकमलोत्पलशङ्खभृङ्ग-
हंसान्पृथग्जगृहुराकृतिमात्रभेदात् ॥ १०२ ॥

पङ्कानि केचिदपरे सिकताः परे तु
पद्मोत्पलानि कतिचिद्भ्रमरीमरालान् ।
मण्डूककूर्ममकरानितरे तु तत्र
हेमाशया जगृहिरे पृतनासु योधाः ॥ १०३ ॥

प्रतिकरिपरिशङ्कितद्राहिनीगन्धदन्तावल-
प्रतिहतिशिथिलक्षरज्जम्बुसंभूतभूरिद्रवा ।
सरिदियमभितोऽपि संप्लावयन्ती वनं तीरयो-
रकृत कृतनिवेशमस्मिन्बलं हैममेवाखिलम् ॥ १०४ ॥

इति नवमः सर्गः ॥



# दशमः सर्गः ॥

---

दिक्पतीनथ विजेतुमुत्सुका
देवशैलशिखराग्रवर्तिनः ।
उत्पपात सह सैनिकैर्दिवं
स्यन्दनेन महता तटातका ॥ १ ॥

सज्जसिन्धुरतरङ्गसंकुला
सा दिवि प्रचलिता पताकिनी ।
आववार सहसामरावती-
मप्रतर्कितनिरोधविह्वलाम् ॥ २ ॥

सत्पथोत्पतनजातकौतुक-
स्तब्धमुक्ततुरगा शनैः शनैः ।
यावदाप न दिवं तटातका
तावदत्र ववृते महान्रणः ॥ ३ ॥

तद्भटाश्रिरनिरुद्धदोर्मदाः
संप्रहारविमुखेषु राजसु ।
तं महाहवमुपस्थितं सुरै-
र्भागधेयफलमित्यमंसत ॥ ४ ॥

नित्यमुन्मुखचरान्सुरद्विपा-
न्सायकैरिव निपात्य शायितान् ।
कीटपेषमपिषन्ससादिनः
पद्भिरेव करिणो मदोद्धताः ॥ ५ ॥

यत्तदाहवभुवि प्रवर्तितं
लोहितं निपतितं क्षमातले ।
अग्रतः सुरगिरेरिलावृते
लोहितोदमिति तच्छ्रुतं सरः ॥ ६ ॥

दिग्जये भुवि हता रणेषु ये
द्योचराः समभवन्विरोधिनः ।
ते निपेतुरुपजातमन्यव-
स्तेजसीव शलभाश्चमूमुखे ॥ ७ ॥

अभ्युपेयुरपरेद्युरेव या-
न्संप्रसाद्य बहुधा जयाय ये ।
संप्रजह्रुरपरेद्युराहवे
सैनिकाः सुमनसस्त एव तान् ॥ ८ ॥

भर्त्सिता दिविचराश्चभूचरै-
स्त्वंकृतेन युधि हुंकृतेन च ।
देवमानवदशाविपर्ययं
वीक्ष्य वीक्ष्य वितथं निशश्वसुः ॥ ९ ॥

स्वे बले परबले च ये हता-
स्तान्द्वयानपि समेत्य देवताम् ।
तत्क्षणात्पुनरुपस्थितान्रणे
वीक्ष्य विस्मयमवाप सा चमूः ॥ १० ॥

तान्निरीक्ष्य समशीर्षिकान्रणे
सैनिकेषु कतिचिन्महारथाः ।
संप्रबोध्य मलयध्वजात्मजां
संनिपेतुरनपेक्षितासवः ॥ ११ ॥

भूसुरस्वमुपभुज्य केवलं
ते हि पुष्टवपुषो दिवौकसः ।
तन्मुखे शिथिलतां जगाहिरे
सेतवः पयसि सैकता इव ॥ १२ ॥

यावदस्त्रमभिमन्त्रितं सुरैः
संनिकर्षति न तान्महारथान् ।
तावदेव सह तैः पलायितै-
स्तत्तदस्त्रमपि धावितं पुरः ॥ १३ ॥

हन्यमानममृतान्धसां बलं
वीक्ष्य केऽपि युधि मानवामराः ।
पूर्वबान्धवदशोपदर्शिन-
स्तेषु सान्त्ववचनानि चक्रिरे ॥ १४ ॥

तां पलायनपरामितस्ततो
दुर्ग्रहां दिविषदामनीकिनीम् ।
संग्रहीतुमपटुः शतक्रतुः
संमुखीनमचलत्स्वयं पुरः ॥ १५ ॥

तं निरीक्ष्य शतमन्युमग्रत-
स्तन्मुखे चलितमम्बिकारथम् ।
स्तम्भयन्प्रणतिभिश्च सान्त्वनैः
संचचाल सुमतिः स्वयं पुरः ॥ १६ ॥

तां विहाय शतमन्युतां निजां
संश्रितं युधि सहस्रमन्युताम् ।
शक्रमेक्ष्य सुमतौ जयाशिष-
श्चेतसा प्रयुयुजे तटातका ॥ १७ ॥

ये शरा नमुचिजम्भभेदिनो
ये च वृत्रबलघातिनो हरेः ।
ते किलार्धपथ एव दारिताः
सायकैः सुमतिचापनिःसृतैः ॥ १८ ॥

आददे जयति मीनलोचने-
त्येकमेव मनुमीरयन्नयम् ।
यच्छरानजनि तेन निष्फलं
दिव्यमस्त्रमखिलं दिवस्पतेः ॥ १९ ॥

मार्गणाः कतिपये मरुत्वत-
स्तस्य मर्मसु पतन्ति वा न वा ।
मर्मसु प्रविविशुस्तदाशुगाः
सर्व एव तु मघोनि दृङ्मये ॥ २० ॥

अक्षिभिः शरचितैः पुरःस्थितै-
रक्षतैस्तु चरमाङ्गवर्तिभिः ।
निष्फलैः शतमखे तु निष्क्रिये
संदधे न सुमतिः शिलीमुखान् ॥ २१ ॥

तं निरीक्ष्य समयं चमूचरा-
श्चोरहूणयवनादयो भटाः ।
भूषणैर्मणिमयैः समं हरे-
रायुधं कुलिशमप्यपाहरन् ॥ २२ ॥

स्थापितो भुवनमातुरग्रतः
स प्रसह्य पृतनाग्रचारिभिः ।
लज्जया शररुजा भयेन च
स्तम्भवद्बलभिदास्त केवलम् ॥ २३ ॥

संप्रणम्य सुमतिस्तटातकां
धारयञ्छिरसि तत्पदं चिरात् ।
लालितो बहुविधाभिरुक्तिभि-
स्तं च तच्चरणयोर्न्यपातयत् ॥ २४ ॥

वीक्षितः स करुणार्द्रया दृशा
वासवश्चरणयोर्नतस्तया ।
स्वस्थतामुपगतो यथापुरं
प्राह तां सुमतिनानुमोदितः ॥ २५ ॥

पश्य देवि पदमेतदामरं
पाल्यते स्म मलयध्वजेन यत् ।
अभ्युपेत्य शतशः सहायता-
माहवेषु दनुजान्निगृह्णता ॥ २६ ॥

स्वर्गवीयमयमप्सरोगणः
पश्च देवि सुरपादपा इमे ।
एष सागरभवो मणिर्महा-
नेष यूथपतिरेष सैन्धवः ॥ २७ ॥

त्वं गृहाण वितरानुयायितां
मां नियोजय यथापुरं तु वा ।
त्वं प्रमाणममराश्रिया समं
द्यौरियं तव पदे निवेदिता ॥ २८ ॥

आगतां नरचमूमतर्किता
तावकीति कथमप्यजानता ।
प्रत्यवस्थितमिव क्षणं हि य-
त्तत्क्षमस्व शरणागते मयि ॥ २९ ॥

इत्थमुक्तवति पाकशासने
सा जगाद शरणागतप्रिया ।
क्षान्तमेव निखिलं मयाधुना
शान्तचेतसि पुरंदर त्वयि ॥ ३० ॥

स्वीकृतं तदखिलं त्वयार्पितं
स्वीकृतं पुनरिदं मया तव ।
एक एव गतशङ्कमिन्द्रतां
वर्तय त्वमिह वासरे विधेः ॥ ३१ ॥

सुन्दरेशमभिषेक्तुमर्चितुं
स्वर्गवीं सुरतरूंश्च केवलम् ।
मामनु प्रहिणु वासवेति सा
तं विसृज्य चलिता ततः पुरः ॥ ३२ ॥

आनकध्वनिभिरश्वहेषितैः
क्ष्वेलितैर्द्विरदबृंहितैरपि ।
प्रज्वलन्नपि शशाम पावकः
पाण्ड्यराजदुहितुर्विनिर्गमे ॥ ३३ ॥

मा विधेहि सुमतेऽभिषेणनं
रुन्धि रुन्धि चलितां पताकिनीम् ।
मामको हि जनको हुताश इ-
त्यादिदेश मलयध्वजात्मजा ॥ ३४ ॥

यावदित्थमनुशास्ति सा चमूं
तावदेव तनयादिदृक्षया ।
मङ्गलान्युपहरन्नुपायना-
न्याजगाम धुरि हव्यवाहनः ॥ ३५ ॥

सावरुह्य सहसा शताङ्गतः
संप्रणम्य मुदिता हुताशनम् ।
प्रार्थिता मुहुरनेन तानि च
प्राभृतानि विविधान्युपाददे ॥ ३६ ॥

जम्बुसिन्धुतटसंभवा निशा
नीलशैलशिखराहृता मषी ।
अम्बराणि मणयश्च भास्वराः
स्वाहया पृथगथोपजह्निरे ॥ ३७ ॥

पाणिपीडनमहोत्सवे तव
प्रार्थये सपदि साक्षितामिति ।
ईरिते हुतवहेन सस्मिता
तं विसृज्य चलति स्म सा पुरः ॥ ३८ ॥

मा कदापि मधुरापुरीजुषां
दृक्पथेषु पततेति बोधिताः ।
नित्यमेव समवर्तिना भटा-
स्तां निरीक्ष्य पृतनां प्रदुद्रुवुः ॥ ३९ ॥

तारिताः सुमतिनाग्रगामिना
तत्र तत्र निरयस्थिता जनाः ।
मातुरेष महिमा यदीदृशी
भक्तदृष्टिपथपातिनां गतिः ॥ ४० ॥

संवृतं मुसलपाशपाणिभिः
सर्वतो भटगणैर्गदैरपि ।
पश्यति स्म पथि दूरतः स्थितं
प्राञ्जलिं रविसुतं तटातका ॥ ४१ ॥

सोऽभिगम्य सुमतेरनुज्ञया
तां प्रणम्य पदयोः समुत्थितः ।
स्वां गदामुपहरन्नविप्लुतां
प्रश्रितो वचनमेतदाददे ॥ ४२ ॥

भारतक्षितितले भवद्वशे
सन्ति दुष्कृतकृतो न जन्तवः ।
प्राक्स्थिताश्च नरकेषु तारिताः
प्राप्त एवमिह विश्रमो मया ॥ ४३ ॥

निष्क्रियोऽस्मि किमिह स्थितेन मे
संचरामि सबलश्च मूमुखे ।
ये भवन्ति परिपन्थिनोऽत्र ते
तेषु देवि विनियुङ्क्ष्व मामिति ॥ ४४ ॥

संयुगेष्वभिमुखा न सन्ति नः
सन्ति चेदतिथयो दिवस्तु ते ।
सर्वथैव तव विश्रमोऽर्ह इ-
त्याह तं सुमतिराहितस्मितः ॥ ४५ ॥

सा निवर्त्य समवर्तिनं ततः
संचचाल पुरतः शनैः शनैः ।
आययौ निर्ऋतिराहृतोपद-
स्तावदेव सबलः सबान्धवः ॥ ४६ ॥

अद्य पुण्यजनता ममागते-
त्यालपन्तमिममानतं पदे ।
सा विसृज्य सलिलाधिपोन्मुखी
संचचाल मलयध्वजात्मजा ॥ ४७ ॥

उल्ललत्तिमितिमिङ्गिलोद्भटं
 ग्राहकच्छपकुलीरसंकुलम् ।
वाहिनी वरुणसैन्यमग्रत:
 पश्यति स्म सुमते: पुर:सरी ॥ ४८ ॥

शस्त्रजालमपविध्य सर्वतो
 वागुराश्च बडिशानि च स्वयम् ।
संप्रगृह्य मृगयाकुतूहला-
 त्संननाह पृतना चिराय सा ॥ ४९ ॥

शङ्खविद्रुमसरोजमौक्तिक-
 प्रायमाप्यमुपहारमण्डलम् ।
आहरन्पुनरपां पति: क्षणा-
 दाजगाम शरणं तटातकाम् ॥ ५० ॥

वारुणीं पलितरोगहारिणी-
 मद्भुतामगुडपिष्टशीधुजाम् ।
वाजिनश्च हरितानपां पति:
 संनिधाप्य निपपात पादयो: ॥ ५१ ॥

प्राभृतं तदखिलं प्रचेतसः
सा निरीक्ष्य सदयेन चेतसा ।
तं विसृज्य विनतं तटातका
गन्धवाहनगरोन्मुखी ययौ ॥ ५२ ॥

मारुतैर्मलयजेन्दुगन्धिभि-
र्मन्दमन्दमुपदर्शितात्मभिः ।
स्वर्धुनीसलिलपातशीतलैः
सेव्यते स्म चतुरं वरूथिनी ॥ ५३ ॥

दाक्षिणात्यमनिलं पुरःसरं
ते विधाय मरुतोऽपरे पुनः ।
पारिजातकुसुमोपहारिण-
स्तां सुमत्यनुमताः सिषेविरे ॥ ५४ ॥

तान्प्रदर्श्य पवनान्पृथक्पृथ-
ग्व्याजहार सचिवो नृपात्मजाम् ।
एष जानपद एव देवि नो
मारुतो मलयशैलमाश्रितः ॥ ५५ ॥

पश्य चक्रपवनानिमान्पुरः
सन्ततोर्ध्वगतिवाददेशिकान् ।
आरसातलममीभिरुद्भ्रम-
त्यर्णवस्तिमितिमिङ्गिलाकुलः ॥ ५६ ॥

आहरन्ति तरुवन्महागिरी-
नर्णवान्पृषतवत्किरन्ति च ।
आविरिञ्चिभवनादनर्गला-
न्पश्य तान्प्रलयमारुतानितः ॥ ५७ ॥

पश्चिमान्द्रुमलताप्रभञ्जना-
नौत्तरान्घनतुषारवर्षिणः ।
प्राग्भवान्प्रियकचातकप्रिया-
न्यानवैषि त इमे समीरणाः ॥ ५८ ॥

भूतले कवलयन्ति पन्नगा
व्योम्नि भारवहने नियुञ्जते ।
तावके तु विषये तटातके
संचरन्ति सुखिनः समीरणाः ॥ ५९ ॥

दर्शिताः सुमतिनेत्थमादृताः
प्रेषिताश्च सदयं तयानिलाः ।
स्वस्वचेष्टितकृतः कुतूहला-
त्स्त्रां पुरीं प्रति ययुस्तदग्रतः ॥ ६० ॥

प्रस्थिता धनपतेर्जिगीषया
पाण्ड्यराजतनया ततः शनैः ।
प्राक्ततोऽपि स पथि व्यवस्थितः
प्राभृतैः कनकरत्नराशिभिः ॥ ६१ ॥

तं निपत्य पदयोः समुत्थितं
यक्षकिंपुरुषकिंनरेश्वरम् ।
अन्वकम्पत दृशा दयार्द्रया
प्रश्रयेण कथयन्तमन्तिके ॥ ६२ ॥

अम्ब कश्चिदलमेव मे जये
नैगमेषु मधुरानिवासिषु ।
भक्त इत्युपनतं प्रतीच्छ मां
पश्य किंचिदिदमाहृतं पुरः ॥ ६३ ॥

शङ्खपद्ममकरादयस्त्वमी
मातरष्ट निधयो मयाहृताः ।
उत्तमस्तु स वरस्त्वयाग्रतो
लभ्यते चल पदानि कानिचित् ॥ ६४ ॥

इत्युदीरितगिरं विसृज्य तं
प्रस्थिता प्रमथनाथसंनिधिम् ।
तावतीमविगणय्य वाहिनीं
संननाह समराय सा स्वयम् ॥ ६५ ॥

चन्द्रशेखरपुरीसमीपतः
सा निविश्य सकला पताकिनी ।
सिंहनादमतनिष्ट बृंहितं
बृंहितानकनिनादहेषितैः ॥ ६६ ॥

नादमेनमवकर्ण्य चुक्रुधे
नन्दिना पुरभिदा तु पिप्रिये ।
नापरोऽस्ति चतुरो महेश्वरा-
न्नादतत्त्वमवबुध्य नन्दितुम् ॥ ६७ ॥

संवृतः प्रमथसेनया स्वया
संनिकर्षमुपसृत्य शूलिनः ।
व्याहरन्नरचमूसमागमा-
त्प्रज्वलन्निव शिलादनन्दनः ॥ ६८ ॥

गर्भदासकुलदासतां गता
ये हि पाण्ड्यविषये नृपास्त्वयि ।
तेषु वेत्सि कुलशेखरं नृपं
तत्सुतं च मलयध्वजं ततः ॥ ६९ ॥

तस्य नाम दुहिता तटातका
किंचिदुच्चलितशैशवा सती ।
संनिपात्य तृणपूलवच्चमूं
मानुषीमित इतोऽभिवर्तते ॥ ७० ॥

सा मनुष्यवशगेषु केषुचि-
त्तादृशेषु विबुधाधमेष्वपि ।
संप्रदर्शितपराक्रमा सती
मन्यते न हि महेश मामपि ॥ ७१ ॥

तां प्रधाव्य धरणीतलं तत-
स्तत्पदानुपदिकान्सुराधमान् ।
तापसांश्च कतिचित्तदाश्रया-
न्दण्डयेयमिति दण्डवन्नतः ॥ ७२ ॥

तं जगाद गिरिशः कृतस्मितः
सा पुनः श्रुतिपथं गतैव नः ।
अप्रमत्तमभिषेणयन्निमां
स्वस्तिमान्पुनरुपेहि मामिति ॥ ७३ ॥

तां गिरं तमपि च स्मिताङ्कुरं
सोऽविचिन्त्य किमपि स्मरद्विषः ।
निर्जगाम समराग्रही बहिः
सप्तभिर्गणचमूपकोटिभिः ॥ ७४ ॥

तत्र सप्तनयनास्त्रिनासिकाः
षण्मुखा द्विजठरा दशाङ्घ्रयः ।
षष्टिसप्ततिभुजा ज्वलत्कचा
मुण्डिताः धृतशिखाः कपर्दिनः ॥ ७५ ॥

वीतबाहुचरणा विमस्तकाः
  कुक्षिलग्नवदनाः शिरोऽङ्घ्रयः ।
विष्फुलिङ्गनयना विषोद्गिरा
  लम्बमानरसनोष्ठनासिकाः ॥ ७६ ॥

श्वेतपीतहरितासितारुणाः
  शृङ्गिनः सगरुतः सचञ्चवः ।
व्याघ्रदन्तिहयवायसाङ्घ्रयः
  पादपाचलशिलानखायुधाः ॥ ७७ ॥

ऋक्षवानरतरक्षुपन्नग-
  द्वीपिसिंहशरभद्विपाननाः ।
निर्ययुर्युगपदट्टहासिनः
  सङ्घशो युधि गणा मदोल्बणाः ॥ ७८ ॥

धावदश्वमवघूर्णितद्विपं
  नष्टयोधमवसन्नसैनिकम् ।
संप्रमुग्धसचिवं क्षणादभू-
  त्तादृशं तदपि मानवं बलम् ॥ ७९ ॥

ते पदातिकुलमूरुवेगत:
फूत्कृतेन गजवाजिमण्डलम् ।
स्यन्दनांश्च करतालमारुतै-
र्व्यक्षिपन्रणमुखाद्विदूरत: ॥ ८० ॥

क्षुद्रदीपमिव चण्डमारुत:
शुष्कगुल्ममिव दावपावक: ।
ध्वान्तबृन्दमिव भास्करोदय-
स्तद्बलं नरबलं व्यनीनशत् ॥ ८१ ॥

युद्धदर्शनकुतूहलागता:
सिद्धचारणसुपर्वपन्नगा: ।
अप्सरश्चरमभागवर्त्मना
दुद्रुवु: प्रमथयूथदृक्पथात् ॥ ८२ ॥

तां प्रधाव्य पृतनां गणै: समं
संप्रसर्पति शिलादनन्दने ।
अग्रतो व्यचलदात्तकार्मुक:
संप्रहृष्टवदन: सखीजन: ॥ ८३ ॥

बद्धकक्ष्यमपिनद्धकञ्चुकं
कुञ्चितभ्रुकुटि कोमलाननम् ।
मुग्धभीषणमलक्षि तद्बलं
मूर्तमादिमरसद्वयं यथा ॥ ८४ ॥

स्वोचितप्रतिबलानवेक्षण-
स्रस्तयुद्धकुतुका शनैरिव ।
आददे धनुरधिज्यमम्बिका
सा निरीक्षितसखीजनोद्यमा ॥ ८५ ॥

तत्र शक्तिपृतनाधनुश्च्युताः
सायकाः कनकपुङ्खशोभिनः ।
सर्वतः प्रमथमण्डलेऽपत-
ञ्छार्वरे दिनमणेरिवांशवः ॥ ८६ ॥

तां पुरैव विकृतां वरूथिनीं
स्वाशुगैर्विकृतिमापितां पराम् ।
वीक्ष्य वीक्ष्य समरे विजह्रिरे
ता निरीक्षितपरस्परानना: ॥ ८७ ॥

स्रस्तशूलमपविद्धतोमरं
ध्वस्तमुद्गरमपास्तकार्मुकम् ।
नन्दिनं शरणमीयुराहवे
ताडिता गणवरास्तदाशुगैः ॥ ८८ ॥

धावतो गणवरान्निवारयं-
स्तर्जयन्युधि च तत्सखीजनान् ।
संददर्श धुरि तां रथे स्थितां
स द्वितीय इव शंकरो गणः ॥ ८९ ॥

निर्दयं प्रविविधुः सखीजना
मन्दमन्दमिषुभिस्तमम्बिका ।
मातृहस्तगलिता हि मार्गणाः
कस्य मर्मणि निवेष्टुमीशते ॥ ९० ॥

स्वामिनीति जननीति चावशा-
न्निःसरत्सु वचनेषु चासकृत् ।
पाणिना स युयुधे क्षणं बला-
दञ्जलिं प्रतिमुहुश्चिकीर्षता ॥ ९१ ॥

पाण्ड्यराजदुहितुः करच्युता
नाशुगास्तमसुभिर्व्ययोजयन् ।
तत्त्वतो हि कुसुमानि सायका-
नैक्षवं च धनुराहुरागमाः ॥ ९२ ॥

सर्ववित्स हि शिलादनन्दनः
संनिवृत्य झटिति स्वयं रणात् ।
स्वामिने तदखिलं व्यजिज्ञप-
त्पादयोः प्रणिपतन्मुहुर्मुहुः ॥ ९३ ॥

सन्धिरेव भवतस्तयोचितः
सङ्करो न तु महेश जात्वपि ।
एहि याम इति वादिनं तु तं
सोऽवलम्ब्य निरगात्कृतस्मितः ॥ ९४ ॥

पाण्ड्यराजदुहितुर्हि दक्षिणः
प्रास्फुरत्समरकर्मणे भुजः ।
वीक्षिते तु वृषभध्वजे विभो-
रस्फुरत्स्वयमदक्षिणो भुजः ॥ ९५ ॥

आदिमं रसमिवात्तविग्रहं
त्यक्तरौक्ष्यमिव तेजसां निधिम् ।
सा ददर्श शरदिन्दुसुन्दरं
पुंगवे पुरहरं सनन्दिनम् ॥ ९६ ॥

स्रंसते स्म सशरं धनुः करा-
त्तत्वरे तमुपगूहितुं मनः ।
उन्ममज्ज पुलकोऽभितस्तदा
निर्ममज्ज हृदयेऽधिकः कुचः ॥ ९७ ॥

यं प्रहर्तुमवलम्बितं धनुस्तं
निरीक्ष्य समरे तदुज्झितम ।
तत्कटाक्षशरणः समाददे
साभिमान इव मीनकेतनः ॥ ९८ ॥

तद्विलोकविवशीकृते हरे
बाणपातचकिते च नन्दिनि ।
रन्ध्रमेतदुपलभ्य दर्पकः
स्वां रुषं सफलयांबभूव सः ॥ ९९ ॥

युध्यते कथमियं कुमारिका
　युध्यते कथमसौ हरस्त्विति ।
द्रष्टुमिच्छति जगत्त्रये स्मर-
　स्तावुभौ शरगणैरिवाकिरत् ॥ १०० ॥

यां विदन्ननपराध्यमाशुगं
　प्रागजीयत कृतश्रमः स्मरः ।
अद्य लब्धमनया महद्यशः
　काल एव विजयस्य कारणम् ॥ १०१ ॥

तस्तम्भिरे च मुमुहुश्च चकम्पिरे च
　वित्रासिता युधि तया प्रमथाः समस्ताः ।
सद्यो दशा परिणता ननु सैव तस्यां
　कस्यापि जीर्यति न शैवजनापचारः ॥ १०२ ॥

मारस्य चार इव वीक्ष्य हरं पुरस्ता-
　दन्तर्यदा प्रविशति स्म कुचस्तृतीयः ।
संबोधितः सुमतिना सविधं तदैव
　तस्या जगाम तरुणस्तरुणेन्दुमौलिः ॥ १०३ ॥

दद्दशे किल पुष्पवर्षमेकं
प्रकटं मूर्ध्नि तयोस्तदा प्रवृत्तम् ।
हृदयस्थपरस्पराधिगम्यं
ववृते चान्तरमाङ्गजं तदन्यत् ॥ १०४ ॥

उन्नमय्य मुखमानतमस्याः
पाणिनेदमवदत्प्रमथेशः ।
पश्य देवि किमपत्रपसे त्वं
यत्त्वया युधि वयं विजिताः स्मः ॥ १०५ ॥

घटितमखिलं ज्ञातो भावो न किंचन शेषितं
तदपि भवतीं वाचा याचामि काञ्चनमालिकाम् ।
इति निगदति स्मेरे शंभौ रसोत्तरमुत्तरं
चतुरमवदत्सद्यो बाला तथा क्रियतामिति ॥१०६॥

चातुर्यं तदवेत्य वाक्यसरणौ चन्द्रार्धचूडामणि-
र्बाले तत्क्रियते तथैव भवती सद्यः परावर्तताम् ।
आसन्ने विधुवार एव मधुरामेतास्मि सज्जीभवे-
त्याभाष्य स्मितमन्थरं स्वयमसावन्तर्दधे तामपि ॥

सद्यः करग्रहफला तव जैत्रयात्रे-
त्युक्तं न विस्मर वचः कलशीभुवेति ।
सा बोधिता सुमतिना सविलज्जमन्तः
स्मित्वा तदैव मधुराभिमुखी प्रतस्थे ॥ १०८ ॥

इति दशमः सर्गः ॥



## एकादशः सर्गः ॥

अथोत्थितां तामनुगृह्णती चमूं
सुखप्रसुप्तप्रतिबोधितामिव ।
विहाय सा भूमिपथं सखीवृता
विहायसा प्रास्थित पुष्पकाश्रिता ॥ १ ॥

ददर्श वल्मीकवदुन्नतान्गिरी-
न्महान्त्यरण्यान्यपि शाड्वलानिव ।
सुरापगाद्याः सरितोऽपि तन्तुव-
द्विदूरभावादवनौ नृपात्मजा ॥ २ ॥

पुरोपशल्योपवनेऽवतीर्य सा
शुभे मुहूर्ते सुमतिप्रवेदिते ।
विवेश राज्ञो भवनं परिष्कृतं
गजेन दुग्धार्णवजन्मना शनैः ॥ ३ ॥

प्रविश्य गेहं सदसि क्षणं स्थिता
विसृज्य पौराननुयायिनोऽपि च ।
सखीसमेता सुमतौ पुरःसरे
जगाम मातुः सदनं तटातका ॥ ४ ॥

अभिद्रवन्तीं द्रुतमासनान्निजा-
त्प्रमोदबाष्पस्थगितेक्षणामियम् ।
ननाम नाम स्वमुदीर्य पादयो-
र्विकीर्णपुष्पा विनयेन मातरम् ॥ ५ ॥

सुतां विनम्रां परिरभ्य निर्भरं
शिरस्युपाघ्राय चुचुम्ब चानने ।
पुनश्च माता परिषस्वजे चिरं
पुनश्च जघ्रौ सुचिरं शिरस्पदे ॥ ६ ॥

नियन्त्रितानन्दतरङ्गसंप्लवां
निरुद्धहर्षाश्रुलवां कथंचन ।
समेत्य सख्यः सुमतिश्च पादयो-
र्मुहुः प्रणेमुर्महिर्षी महीपतेः ॥ ७ ॥

इयं नदीभर्तुरियं सुधान्धसा-
मियं नृपाणामुपदेति मन्त्रिणा ।
निवेद्यमानेऽपि सुतामुखार्पितां
न दृष्टिमावर्तयितुं शशाक सा ॥ ८ ॥

इयाञ्जयस्ते सुमतेः प्रभावतः
सखीभिराभिः सुखमस्मि पोषिता ।
इमान्समालोकय देवि तावदि-
त्यबोधयन्मातरमम्बिका स्वयम् ॥ ९ ॥

तथेति सा मन्त्रिनिवेदितां पृथ-
ग्ददर्श दिव्यामुपदां च पार्थिवीम् ।
सुरद्रुमान्स्वर्गगवीं च पूजिता-
न्प्रणम्य जग्राह नृपालभामिनी ॥ १० ॥

वरः सुराणां जगतां च यो वरो
वरः स एव स्वयमम्बयार्जितः ।
किमेभिरद्येत्यवदन्महत्प्रियं
समेत्य सख्यः सुमतिश्च तां प्रति ॥ ११ ॥

किमेतदित्यप्रतिपत्तिमन्थरां
विशिष्य देवीं सुमतिर्विबोधयन् ।
स संविधित्सुः सकलं तदाज्ञया
बहिः प्रतस्थे बहुधा तयाद्दतः ॥ १२ ॥

उपस्थितेशानविवाहमङ्गला-
मुदीक्ष्य पुत्रीं मुमुदे न सा तथा ।
यथा व्यषीदत्तनयोत्सवप्रियं
पतिं स्मरन्ती मलयध्वजं नृपम् ॥ १३ ॥

परीत्य हेमाम्बररत्नभूषणैः
प्रवर्तितारात्रिकमङ्गला स्वयम् ।
चकार रक्षां जननी तनूभुवः
सितेन फाले भसितेन शूलिनः ॥ १४ ॥

अथोपकार्या विविधाः सुधान्धसां
धराभुजां तत्र तपस्विनामपि ।
समस्तवस्तूपचिताः समन्तत-
श्चकार सज्जाः सुमतिः क्षणादिव ॥ १५ ॥

सुगन्धिगन्धद्रवलिप्तभित्तिकं
सुवर्णरम्भाघटितं गृहे गृहे ।
नियन्त्रितच्छत्रमुदञ्चितध्वजं
पुरं स्वतः पौरजनैरलंकृतम् ॥ १६ ॥

विनिर्गतः सुन्दरनाथलिङ्गतो
महेश्वरो मानुषमास्थितो वपुः ।
पुरोपशल्येऽवततार संवृतो
गणैः सुरैर्मातृगणैश्च सर्वतः ॥ १७ ॥

स पाण्ड्यदेवीप्रहितेन मन्त्रिणा
निवेदितासन्नमुहूर्तमङ्गलः ।
प्रभुर्विवाहोचितवेषसुन्दरः
प्रवेष्टुकामो मधुरां विनिर्ययौ ॥ १८ ॥

किरीटकोटीघटितोऽस्य पाटलो
मणिर्बभौ वासुकिनोपदीकृतः ।
निकृत्य बालं विधुमुच्चकैस्ततः
परिस्फुरन्बाल इह त्विषां पतिः ॥ १९ ॥

विजित्य मारं जगदेकधन्विनं
यदाप कीर्तिं महतीं महेशितुः ।
तदक्षि तस्मिन्नधुना विजृम्भिते
ममज्ज मन्दाक्षवशादिव स्वयम् ॥ २० ॥

प्रसक्तमङ्कं विमले कथंचन
प्रमार्ष्टुमीष्टे न शिवोऽपि सर्वथा ।
मृगेण हीनोऽप्यलिकेऽस्य यत्कचि-
द्बभौ मुखेन्दुर्मृगनाभिलाञ्छितः ॥ २१ ॥

कपोलसौन्दर्यममुष्य पश्यतः
कटाक्षरेखाः पतिता जनस्य याः ।
नवोद्गतश्मश्रुनिभादिहैव ता
निषेदुरत्यादरकीलिता इव ॥ २२ ॥

विशुद्धमुक्ताफलकुण्डलाङ्कितं
विकीर्णमन्दस्मितसुन्दराधरम् ।
विशालनेत्रं वदनं निरीक्षितुं
तदस्य सैवार्हति मीनलोचना ॥ २३ ॥

विशुद्धहेमत्विषि विश्वमङ्गले
वपुष्यमुष्याद्भुतकुङ्कुमाङ्किते ।
अलक्षि सूक्ष्मो विशदश्च कञ्चुको-
ऽवतंसितेन्दोरिव चन्द्रिकाङ्कुरः ॥ २४ ॥

मुहूर्तपर्यन्तविलम्बनाक्षमा-
विजृम्भमाणस्मरसंज्वरार्जितः ।
विनीलिमेव व्यरुचद्भुजान्तरे
तनुस्तदीये मृगनाभिचर्चिका ॥ २५ ॥

पृथग्विधाभिर्मणिहारयष्टिभिः
परिष्कृतं तद्वपुरैन्दुशेखरम् ।
अलक्ष्यताखण्डलचापमण्डितः
पयोधरः सान्ध्यरुचेव पाटलः ॥ २६ ॥

मणीमयैरङ्गदकङ्कणादिभि-
र्भरं न मेने मृदुलोऽपि तद्भुजः ।
महीधराणां महतां फणाभृतां
विरोपणासादितलाघवोत्सवः ॥ २७ ॥

दिगम्बरः काञ्चनमम्बरं हरः
　कथं बभारेति न विस्मयाय नः ।
तनुत्विषा तस्य दिशो दशापि य-
　त्प्रतप्तकार्तस्वरभास्वरीकृताः ॥ २८ ॥

किमस्य मञ्जीरपदे कृतालयाः
　परीत्य मुक्ताश्चरणं सिषेविरे ।
महोत्सवं द्रष्टुमिमं महेश नः
　सकृत्पुनः संसरणं भवत्विति ॥ २९ ॥

वपुश्चिदानन्दमयं यदद्भुतं
　तदावृतं तावदविद्ययाद्यया ।
इदं ततः सुन्दरमित्थमावृतं
　मणित्विषेति व्यषदन्महर्षयः ॥ ३० ॥

विभूषितस्यास्य पुरः पुरन्दरो
　विशालमेकं मुकुरं समाददे ।
न तत्समश्चेति गिरं पुरातनी-
　मपाकरिष्यन्निव बिम्बलम्भनात् ॥ ३१ ॥

स नन्दिना संघटितं पदाब्जयोः
पुनः पुरारिर्मणिपादुकायुगम् ।
करौ कृतार्थौ कमलाक्षवेधसोः
सलीलमालम्ब्य शनैर्बहिर्ययौ ॥ ३२ ॥

मदालसाभिक्रमणाक्षिमीलनैः
करार्पणाकुञ्चितकर्णचापलैः ।
गजाननात्तत्क्षणशिक्षितैर्दृढं
स पुङ्गवः कुञ्जरपुङ्गवोऽभवत् ॥ ३३ ॥

उदञ्चिताकुञ्चिततत्पुरःपद-
क्षणार्पिताङ्घ्रिः श्रवणावलम्बनः ।
सलीलमुन्नम्य स पूर्वपर्वतं
पतिस्त्विषां बाल इवारुरोह तम् ॥ ३४ ॥

निगृह्यमाणौ करिणौ मुहुर्मुहुः
पुनर्नयन्तौ सममाज्ञया विभोः ।
कृतानुलापौ विधिकेशवौ तदा
प्रचेलतुस्तस्य तु पार्श्वयोर्द्वयोः ॥ ३५ ॥

क्वचिन्महाकालमुखान्गणेश्वरा-
न्क्वचिच्च देवासुरसिद्धचारणान् ।
नियन्त्रयन्दूरत एव पार्श्वयो-
श्चचाल नन्दी पुरतः सवासवः ॥ ३६ ॥

स्मृतीतिहासैर्निगमास्तमेकतः
शिवागमास्तत्रगणैस्ततोऽन्यतः ।
ववन्दिरे वन्दिदशामुपाश्रिता
विमिश्रिता योगिभिरात्मदर्शिभिः ॥ ३७ ॥

पुरः पुरः पाण्ड्यनृपालवाहिनी
ततोऽनु देवाः प्रमथास्ततोऽनु च ।
ततोऽनु भेरीजयकाहलादय-
स्ततोऽनु चेलुर्विविधा जयध्वजाः ॥ ३८ ॥

शचीमुखैर्निर्जरकामिनीजनैः
समावृते मातृगणैश्च सर्वतः ।
महार्हकर्णीरथमध्यगे रमा-
वचोधिदेव्यौ तमनु प्रचेलतुः ॥ ३९ ॥

श्रियं नृपाणामवरोधसुभ्रुवो
द्विजातिपत्न्यो दयितां हविर्भुजः ।
गिरं गृहिण्यो विदुषां च सादरं
विशिष्य भक्त्यावनता ववन्दिरे ॥ ४० ॥

समुद्धृतं मूर्धनि तस्य पाण्डरं
प्रकाशते स्मातपवारणं महत् ।
शिरः स्थितं स्वं शिशुमस्य वीक्षितुं
समागतः पूर्ण इव क्षपाकरः ॥ ४१ ॥

सितातपत्रान्तरसंमितं विभोः
शिरस्पदं वीक्षितुमुन्मना मनाक् ।
विधातृहंसः परितः पतन्निव
व्यलोकि धूतं दिवि चामरद्वयम् ॥ ४२ ॥

अयं स राज्ञीपतिरेति पश्यते-
त्यनुद्रवज्ज्ञानपदोक्तिभङ्गिभिः ।
कृताभ्यसूयेषु गणेषु सस्मितौ
हरिर्विरिञ्चश्च तमन्वपश्यताम् ॥ ४३ ॥

पराक्रमं स्वं प्रकटीचिकीर्षता
  समाहृतं शम्बरवैरिणा शिवे ।
बलं निजं मौलमिवाङ्गनाजन-
  स्तमीक्षितुं संनिपपात सर्वतः ॥ ४४ ॥

तमेकवक्त्रं द्विभुजं द्विनेत्रम-
  प्यमानुषं भावमिवास्थितं त्विषा ।
निरीक्षमाणा निभृतैर्विलोचनैः
  परस्परामित्थमवादिषुः स्त्रियः ॥ ४५ ॥

अहो मुखाम्भोजमहो युगं दृशो-
  रहो भुजद्वन्द्वमहो भुजान्तरम् ।
अहो महत्कौशलमस्य वीक्षिते-
  ष्वहो विचित्रा मदवारणे स्थितिः ॥ ४६ ॥

जिता त्वया यत्पृथिवी न तज्जितं
  जिताश्च यद्देवि सुरा न तज्जितम् ।
अनेन यूना यदनन्यनिर्जितं
  जितं वधूजन्म तदूर्जितं जितम् ॥ ४७ ॥

अमुं समालोक्य युगेन सा दृशो-
रमुं समाश्लिष्य भुजद्वयेन वा ।
कथं पुनर्निर्वृणुयात्तटातका-
प्यपूर्णकामाः सकला वयं ततः ॥ ४८ ॥

हृतं मनोऽनेन हृते विलोचने
सहैव नीताः सखि पश्च चासवः ।
इदं वपुर्नः परमत्र पातितं
गतत्रपो विध्यति तच्च मन्मथः ॥ ४९ ॥

त्वदीक्षणायोपगतास्त्वदाश्रिता
हिनस्ति नस्त्वय्यपि पश्यति स्मरः ।
इतीरयामो वयमस्य संनिधौ
प्रभुः किलायं नगरस्य चास्य नः ॥ ५० ॥

मयाम्बुजाक्षः सविशेषमीक्षितो
मयाद्य दृष्टः सविधे चतुर्मुखः ।
अमुं युवानं प्रथमं विलोकय-
न्त्यहं तु मुग्धा न कमप्यवेदिषम् ॥ ५१ ॥

मयास्य दृष्टे विपुलायते दृशौ
मयास्य मन्दस्मितमीक्षितं शुचि ।
अहं द्वयं प्रैक्षिषि साधु साध्वियं
पशुर्हि नः पुच्छविषाणवर्जितः ॥ ५२ ॥

अनङ्गसर्वस्वमनन्यवीक्षितं
न्यधायि यत्पाण्ड्यकुमारिकावशे ।
तदप्यवस्कन्तुमुपागतः स्वयं
युवा किलायं चतुरो जितस्मरः ॥ ५३ ॥

इति प्रवृत्ताः प्रतिवीथि संकथा
मृगीदृशामाकलयन्कृतस्मितः ।
विकीर्यमाणः पथि लाजमौक्तिकैः
पुराङ्गनाभिः पुरशासनो ययौ ॥ ५४ ॥

स राजगेहं समया मतङ्गजं
नियन्त्रयन्नादिशति स्म नन्दिनम् ।
श्रियं च वाणीमपि राजमन्दिरं
प्रवेशय प्रागमरीगणैरिति ॥ ५५ ॥

ततः शिलादात्मजवेत्रताडित-
द्रवन्नभोभूचरसंसदा पथा ।
समं समस्तामरसुन्दरीजनै-
र्जगज्जनन्यौ ययतुर्नृपालयम् ॥ ५६ ॥

पुरस्कृते स्वोचितया सपर्यया
पुरोधसा कुम्भभवेन ते उभे ।
अभिद्रुता काञ्चनमालिका जवा-
द्विकीर्णपुष्पा पदयोरवन्दत ॥ ५७ ॥

पृथक्पृथक् सा परिरभ्य लालिता
शचीरमावाग्जननीभिरादरात् ।
श्रिये सरोजं शुकमुज्ज्वलं गिरे
मणिं च शच्यै विनयादुपाहरत् ॥ ५८ ॥

उपेहि मातामहि कुत्र सा वधूः
प्रदर्शयास्मज्जननीमितीरिता ।
निनाय ताः काञ्चनमालिका शनै-
स्तमालयं यत्र तटातकास्थितिः ॥ ५९

विसृज्य भद्रासनमात्तपादुकां
समायतीं प्रश्रयगन्धिभिः पदैः ।
वधूं विवाहोचितवेषकोमलां
निरीक्ष्य तस्थुर्निभृताः सुरस्त्रियः ॥ ६० ॥

अलक्ष्यतास्या मणिपादुकाञ्चले
समन्ततो मौक्तिकपङ्क्तिरुज्ज्वला ।
अदूरलग्ना चरणारविन्दयो-
रनुश्रवाणामिव वर्णपद्धतिः ॥ ६१ ॥

अतीत्य लाक्षारसमाहितं नवं
मणिप्रभां पादुकयोश्च तावतीम् ।
अकृत्रिमः पाटलिमा पदाब्जयो-
रलक्ष्यतास्या विसरन्बहिः स्फुटम् ॥ ६२ ॥

प्रबोधयन्ती श्रियमक्षिसंज्ञया
सरस्वती तच्चरणाम्बुजद्वयम् ।
क्षणं निदध्यौ विकचेक्षणा तत-
श्चिरं तु दध्यौ मुकुलीकृतेक्षणा ॥ ६३ ॥

समापतन्त्याः सविलासमावभौ
मनोहरोऽस्या मणिमेखलारवः ।
विजित्य शंभुं मदनेन गर्जता
प्रवर्तितोच्चैरिव वीरघोषणा ॥ ६४ ॥

प्रतिक्षणोन्मेषिपयोधरोन्नति-
प्रतिस्फुटत्कञ्चुकसंधिपूरणः ।
उरोजनिःशेषसमावृते बभा-
वुरस्यमुष्या मणिहारकोरकः ॥ ६५ ॥

परस्परस्पर्ध्यपि तत्कुचद्वयं
विजेतुकामं किल मेरुमन्दरौ ।
तथा समेतं समये मिथः स्वयं
यथोपलभ्येत न किंचिदन्तरम् ॥ ६६ ॥

कृपाणचापग्रहकन्दुकाहृति-
प्रपन्नकोटीरतटार्पणादिभिः ।
करौ न काठिन्यमवाप हेतुभि-
र्वदान्यतावासनयेव सुभ्रुवः ॥ ६७ ॥

त्रिलोकजेतुर्जयलाञ्छनेन सा
त्रिभङ्गिसंघट्टितमौक्तिकात्मना ।
करारविन्दं कटकेन बालिका
विभूषयामास मनोभवाज्ञया ॥ ६८ ॥

उपासितुं सा पतिमुत्पलप्रियं
करे च कर्णे च निवेशितोत्पला ।
बभार भूयो नयनोत्पले ततः
स्वयं बभूवोत्पलदामकोमला ॥ ६९ ॥

अलक्षि ताटङ्कयुगान्तरार्पितो
विनिर्मितो मौक्तिकरत्नमण्डलः ।
स्वयंवरायोपगतस्त्यजन्विधुं
तदाननेन्दोरिव तारकागणः ॥ ७० ॥

अलक्ष्यतासन्नकरग्रहोत्सव-
प्रमोदजोऽस्या विशदः स्मिताङ्कुरः ।
विसृत्य नासामणिचन्द्रिका बहि-
र्विभूषयन्तीव रदच्छदान्तरम् ॥ ७१ ॥

प्रचीयमानं मुखरामणीयक-
प्रवाहमित्थं वयसा नवं नवम् ।
अवेक्ष्य मीनाविव जातवल्गना-
वशोभिषातां चपले तदीक्षणे ॥ ७२ ॥

विधुं चतुर्धा प्रविभज्य तन्मुखे
त्रिभिः कपोलौ निटिलं च कल्पयन् ।
तुरीयमंशं विनियोगवर्जितं
न्यवेदयत्स्वामिनि शंकरे विधिः ॥ ७३ ॥

विशेषयामास यदर्धचन्द्रतो
ललाटमस्या मृगनाभिरेखिका ।
विशेषकत्वं वहति स्म तेन सा
ततोऽन्यतस्तत्पदमौपचारिकम् ॥ ७४ ॥

रराज तद्वेणिलतावलम्बिनी
प्रसूनपङ्क्तिश्चरमाङ्गसीमनि ।
प्रहर्तुमीशं समये मनोभुवा
निवेशिता गूढमिवेषुसंहतिः ॥ ७५ ॥

हरस्य शृङ्गाररसाधिदेवता-
मवेक्ष्य तां मन्थरमायतीं पुरः ।
अलज्जत श्रीर्जगदादिसुन्दरी
ललज्जिरे लज्जितुमप्सरोगणाः ॥ ७६ ॥

पदैरिमां प्राकृतवस्तुसंहति-
प्रसक्तसंकेतमलीमसीकृतैः ।
अवर्णयन्ती विरराम भारती
स्ववैदुषीं मौनत एव केवलम् ॥ ७७ ॥

शची तदीयाद्भुतरूपदर्शने
सहस्रमक्ष्णां स्वयमिच्छती सखी ।
अकृत्प्रवृत्त्यापि चकाङ्क्ष गौतमे
बलादहल्याकृतशापमात्मनः ॥ ७८ ॥

ततः शनैर्भूषणगौरवेण सा
सखीजनालम्बितहारमण्डला ।
ननाम वाणीकमले नता स्वयं
सुराङ्गनाभिः परिषस्वजे शचीम् ॥ ७९ ॥

अयं प्रणामो ननु लाभ एव नो
विवाहदीक्षावभृथे तु देवि ते ।
न हि प्रणामावसरं लभेवही-
त्यवोचतां तां परिरभ्य ते दृढम् ॥ ८० ॥

अथावतीर्य द्विरदादलंकृता-
दनुद्रुतः पारिषदैः सुरैरपि ।
विरिञ्चवैकुण्ठकरावलम्बनो
विवेश राज्ञो भवनं महेश्वरः ॥ ८१ ॥

तमर्घ्यपाद्याचमनीयपूर्वया
सपर्यया कुम्भभवः सभाजयन् ।
प्रवेशयामास वरं महर्षिभिः
प्रसन्नया तस्य दृशा कृतार्थितः ॥ ८२ ॥

स पाण्ड्यशुद्धान्तविलासिनीजनै-
र्विकीर्यमाणः शुभलाजमुष्टिभिः ।
जटाभिघातोत्पतदभ्रवाहिनी-
पयःकणाकीर्ण इवाबभौ वरः ॥ ८३ ॥

प्रविष्टमन्तःप्रतिहारसीमनि
प्रतीक्ष्य जामातरमिन्दुशेखरम् ।
प्रचोदिता काञ्चनमालया रमा
चकार पाद्यं पयसास्य पादयोः ॥ ८४ ॥

प्रदीपहस्ता वचसामधीश्वरा
प्रदक्षिणीकृत्य शचीसमन्विता ।
प्रवेशयामास शशाङ्कशेखरं
पुरःसरन्ती दिविषत्पुरन्ध्रिभिः ॥ ८५ ॥

स विद्रुमस्तम्भचतुष्कशोभितां
विचित्रवैदूर्यविटङ्कलाञ्छिताम् ।
विलम्बिमुक्तामणिदामकोमलां
विवेश देवोऽथ विवाहवेदिकाम् ॥ ८६ ॥

भेरीभाङ्कारसान्द्रं बहिरबहिरपि प्रौढशुद्धान्तकान्ता-
पाणिव्याविद्धतूर्यध्वनिजनितचमत्कारसंगीतरम्यम् ।
जामातृश्लाघनोक्तिव्यतिकरितवधूबान्धवोल्लासहासं
जज्ञे राज्ञो गृहं तन्मुनिजनरचितोत्तुङ्गमङ्गल्यपाठम् ॥

इति एकादशः सर्गः ॥

# द्वादशः सर्गः ॥

---

अथासने रत्नमये निषण्ण-
माद्यं युवानं मुनयः पुराणाः ।
आशीर्वचोभिर्विविधैरपुष्ण-
न्ननाहतातोद्यनिनादमिश्रैः ॥ १ ॥

प्रकीर्य पुष्पाणि मणीमयानि
पत्नीं नमन्तीं मलयध्वजस्य ।
श्रिया च वाण्या च निवेद्यमानां
श्वश्रूं हरः प्रैक्षत गौरवेण ॥ २ ॥

अगस्त्यमामन्त्र्य ततो विधातु-
रादेशतः श्रीश्च सरस्वती च ।
निवेशयामासतुरासनार्धे
वधूं ह्रिया नम्रमुखीं वरस्य ॥ ३ ॥

दाने स्वसुर्दानवमर्दनोऽपि
  नियुज्यमानः कमलासनेन ।
श्रिया समं काञ्चनमालिकायाः
  समक्षमाराग्निषसाद वध्वाः ॥ ४ ॥

प्रस्थापितः प्राग्गिरिजाविवाहे
  यत्कुम्भजन्मा तद्दृणं विनेतुम् ।
ब्रह्माणमीशस्तु विवाहहोमे
  वव्रे तमध्वर्युमथाब्जयोनिम् ॥ ५ ॥

यत्नादपि प्रागनवेक्षितं य-
  त्तच्छाम्भवं पादतलं मुकुन्दः ।
पद्माकरावर्जितपाद्यधौत-
  मानर्च पश्यन्निभृतं प्रसूनैः ॥ ६ ॥

आरोपयन्नङ्कतलं हरिस्ता-
  माचक्षते स्वं परमं पदं याम् ।
राज्यश्रिया दक्षिणया सहैव
  ददौ त्रिवेदीकवये वराय ॥ ७ ॥

दातुर्ग्रहीतुश्च किमस्ति गोत्रं
को वा पिता कश्च पितामहो वा ।
अतोऽद्भुतस्तुभ्यमिमां ददामी-
त्यासीदियानेव तु दानमन्त्रः ॥ ८ ॥

तत्पूर्वमुत्तानदशागृहीत-
संकेतके पाणितले पुरारेः ।
न्यस्तः करः पाण्ड्यकुमारिकायाः
सर्वोत्तरत्वं प्रकटीचकार ॥ ९ ॥

करो गृहीतः पृथिवीपतिभ्यो
दिक्पालकेभ्यश्च यया जयन्त्या ।
तस्यास्त्वयाग्राहि करोऽधुनेति
देवी गिरां सस्मितमाह देवम् ॥ १० ॥

परस्परस्योपरि मन्मथेन
प्रयुक्तमस्त्रं समयं प्रतीक्ष्य ।
संदर्शयन्ताविव चक्रतुस्तौ
माल्यार्पणव्यत्ययमङ्गलानि ॥ ११ ॥

गृह्णन्वरः स्वाञ्जलिना मृगाक्ष्या
　लाजाञ्जलिं होमविधौ चकाशे ।
माल्यापवेधग्लपनापराध-
　निर्माजनायानुनयन्निवेमाम् ॥ १२ ॥

अश्मानमारोपयितुं पदाब्ज-
　मालम्बमाने दयिते मृगाक्ष्याः ।
पादग्रहः प्राथमिकोऽयमस्याः
　प्रचीयतामित्यवदन्मुकुन्दः ॥ १३ ॥

कान्तः शरण्यो जगतां त्रयाणां
　तस्याः करस्थे चरणारविन्दे ।
ऐश्वर्यमुर्व्यादि सदाशिवान्त-
　मव्याहतं तद्बुबुधे करस्थम् ॥ १४ ॥

आमुक्तमञ्जीरमलक्तकाङ्क-
　माकुञ्चितं किंचिदिव ह्रियान्तः ।
स्विन्नं करे स्विद्यति लग्नमैशे
　धन्याः पदं तद्ददृशुर्जनन्याः ॥ १५ ॥

आसीत्तदाविष्कृतहर्षबाष्प-
मक्षिद्वयं काञ्चनमालिकायाः ।
आ मानुषादा च महेश्वरीया-
दानन्दसाम्राज्य इवाभिषिक्तम् ॥ १६ ॥

आधीयमानेऽश्मनि तत्पदाब्जे
मञ्जीरघोषो मधुरो जजृम्भे ।
सद्यः समास्फालितदोर्द्वयेन
मुक्तः स्मरेणेव जयाट्टहासः ॥ १७ ॥

प्रदक्षिणीकुर्वति हव्यवाहं
द्वन्द्वे जगन्मङ्गलधाम्नि तस्मिन् ।
प्रदक्षिणीचक्रुरिव प्रजानां
दृशस्तदीयोत्पलदामदम्भात् ॥ १८ ॥

निवर्त्य वैवाहिकहोमशेष-
मम्भोजभूः कुम्भभुवोपदृष्टः ।
न्यवेशयद्रत्नमयेऽथ पीठे
वामे वधूं दक्षिणतो वरं च ॥ १९ ॥

आसन्नमप्यन्तरलेशशून्यं
मिथो न तृप्तिं मिथुनं तदूहे ।
अतृप्तयोरेकशरीरभावे-
ऽप्यासक्तिरेषा कतमा तयोः स्यात् ॥ २० ॥

आशीर्भिरानुश्रविकीभिराद्या-
माचारपद्यामनुपालयन्तः ।
संवर्धयामासुरिमौ समेता
ब्रह्मर्षयो ब्रह्ममुखा हसन्तः ॥ २१ ॥

स दक्षिणाभिः परितोष्य विप्रा-
न्संमान्य देवानुचितोपचारैः ।
विश्रान्तिहेतोरवरोधगेहं
विवेश देवोऽथ तटातकायाः ॥ २२ ॥

धैर्योपदेशादसकृत्सखीभ्यां
वाणीरमाभ्यां प्रतिबोधितायाः ।
आलम्बमानः करमम्बिकाया
मञ्चे परार्ध्ये निषसाद देवः ॥ २३ ॥

ताम्राधरोष्ठं तरलायताक्ष-
मास्विन्नमीषन्नपयावनम्रम् ।
वक्त्रं शनैरुन्नमयांबभूव
मार्जन्निव स्वेदलवान्स तस्याः ॥ २४ ॥

ताम्बूलमासन्नसखीवितीर्ण-
मादाय पर्याकुलितां ह्रिया ताम् ।
आलक्षयन्ती कमला सलील-
माह स्म पत्ये प्रतिपादयेति ॥ २५ ॥

कुतो गृहीता वलयास्त्वयेमे
केनोपहारीकृत एष हारः ।
इत्यङ्गमङ्गं पतिराममर्श
जिज्ञासयेवाभरणेषु तस्याः ॥ २६ ॥

आपृच्छयमाना दयितेन तत्त-
दवाङ्मुखी नोत्तरमाचचक्षे ।
निर्बन्धपृष्टा तु कथंचिदेषा
मन्दस्मितेनोत्तरयांबभूव ॥ २७ ॥

माता तवेयं मलयध्वजस्य
　　किं भोगिनी किं गृहिणीषु काचित् ।
इत्युक्तिभिः कोपयतापि पत्या
　　प्रत्युत्तरं भ्रूकुटिरेव लेभे ॥ २८ ॥

तदिङ्गितानामयथावबोधा-
　　त्समाचरन्तीभिरिवान्यदन्यत् ।
संलापयामास रुषा सखीभिः
　　संकेतिताभिः स हसन्नवोढाम् ॥ २९ ॥

यदाह यत्प्रैक्षत यज्जहास
　　यदास्त जोषं यदपि न्यषेधत् ।
सा तेन तेनैव शरीरलाभ-
　　साफल्यमापादयति स्म यूनः ॥ ३० ॥

स यावदित्थं समयाचकार
　　नवोढया नर्मपरो महेशः ।
तावज्जना भक्तकराः समेत्य
　　निर्वर्तितं पाकविधिं शशंसुः ॥ ३१ ॥

ते शासनात्तत्र महेश्वरस्य
प्राक्ब्राह्मणान्भोजयितुं समेतान् ।
संमेलयन्ति स्म समन्ततोऽपि
स्वयं तु भक्त्यासुमतिर्महर्षीन् ॥ ३२ ॥

असेवमानौ नटनं पुरारे-
रपोऽपि यौ जात्वपि नाददाते ।
तौ व्याघ्रपादश्च पतञ्जलिश्च
संनेहतुर्हेमसभां प्रयातुम् ॥ ३३ ॥

आकर्ण्य तन्निश्चयमानिनाय
तौ योगिनौ सुन्दरपाण्ड्यदेवः ।
आचष्ट चैनावभिगम्य भक्त्या
पादौ स्पृशन्प्रश्रयपूर्वमित्थम् ॥ ३४ ॥

सभानटः काञ्चनसंसदीव
संसेव्यमानः सुरसिद्धसंघैः ।
हालास्यनाथोऽपि करोति नृत्त-
मस्मिन्सदा रूप्यसभान्तराले ॥ ३५ ॥

अत्रैव नृत्तं तरुणेन्दुमौले-
रासेव्य माध्याह्निकमद्भुतं तत् ।
आगच्छतं क्षिप्रमनुग्रहीतुं
प्राणाग्निहोत्राचरणादिहास्मान् ॥ ३६ ॥

इतीरितौ पाशुपतौ मुनी तौ
तथेति गत्वा कनकाम्बुजिन्याम् ।
निर्वर्तयन्तौ नियमाभिषेक-
मासेदतुर्नृत्तसभां पुरारेः ॥ ३७ ॥

अन्तर्हितब्रह्मकपालजाल-
माबध्य दृश्येन्दुकलं कपर्दम् ।
आमुक्तवैयाकरणाङ्गदाङ्घ्रि-
रवातरत् तत्र तदा नटेशः ॥ ३८ ॥

मुरं पुरा यः स्वयमाजघान
स एव देवो मुरजं तदानीम् ।
ससर्ज यस्तालमसेवनीयं
स एव तालं जगृहे तु वेधाः ॥ ३९ ॥

प्रागेव यः पाण्ड्यसुतोपलम्भा-
न्नाथः स्थितो नर्तितुकाम एव ।
भक्तानुकम्पामपदिश्य तस्य
नृत्तं तदावर्तत निर्विशङ्कम् ॥ ४० ॥

आतोद्यगीतानुगपादताल-
माविर्भवद्भावरसोत्तरङ्गम् ।
आवर्तवेगत्रुटिताङ्गहार-
मनृत्यदीशो ललिताङ्गहारम् ॥ ४१ ॥

उदञ्चितोऽङ्घ्रिश्चिरमुल्ललास
नृत्ते स्थितावर्तकनाम्नि शंभोः ।
चित्ते विलीने जतुवन्मुनीनां
न्यासादिव स्पन्दयितुं न शक्यः ॥ ४२ ॥

वृत्तौ चकारेव विलम्बितायां
मञ्जीरनादैः प्रणवोपदेशम् ।
तस्यां द्रुतायां स तदूर्ध्वलग्नां
तुर्यामुपादिक्षदिवार्धमात्राम् ॥ ४३ ॥

स्वभावरम्याणि यथा यथास-
न्स्वाच्छन्द्यतस्तस्य विचेष्टितानि ।
तथा तथा पप्रथिरे जगत्यां
शैलूषतन्त्रोपनिषत्प्रभेदाः ॥ ४४ ॥

तालान्तनृत्तारभटीषु तस्य
निर्गच्छतां निश्वसितागमानाम् ।
आदौ महाव्याहृतितामवापु-
र्भूषाभुजङ्गेश्वरफूत्कृतानि ॥ ४५ ॥

उद्भिन्नरोमाश्रुमुदश्रुपूर-
माश्चर्यसंमूढमनन्यवृत्ति ।
आलेख्यविन्यस्तमिवास्त विश्व-
मानन्दनृत्तावसरे पुरारेः ॥ ४६ ॥

संव्यानसंमृष्टमुखं भवान्या
विस्रस्तचन्द्रार्धविलोभनीयम् ।
नृत्तान्तरम्यं वपुरिन्दुमौले-
र्निध्याय तौ तुष्टुवतुर्मुनीन्द्रौ ॥ ४७ ॥

नम्रेषु चित्तान्नवनीतवृत्ते-
र्नाथ त्वदीयादपि कोमलौ यौ ।
अस्मत्कृते तौ चरणौ यदित्थ-
मायासितौ तत्प्रथमं क्षमेथाः ॥ ४८ ॥

त्वयीश नृत्ताद्विरतेऽपि चित्तं
त्वदास्पदं नौ परमाद्भुतेन ।
नाद्यापि नृत्ताद्विरतिं प्रयाति
ततो न किंचित्प्रातिभां भजावः ॥ ४९ ॥

आवां प्रसादेन कृतार्थितौ ते
याचावहे लोकहिताय किंचित् ।
नृत्तोत्सवः काञ्चनसंसदीव
नित्योऽस्त्वमुष्यामपि संसदीति ॥ ५० ॥

तथेति दत्त्वाभिमतं तयोस्त-
त्प्रसेदिवाँल्लोकहितार्थनेन ।
देवोऽनुजग्राह पुनः स्वयं तौ
दत्त्वा शिवज्ञानमनन्यलभ्यम् ॥ ५१ ॥

सेवावसाने पुरशासनस्य
समागतान्भूमिसुरान्सुरांश्च ।
हैमेषु पीठेषु वितीर्णपाद्या-
नस्थापयत्कुम्भभवोऽथ भोक्तुम् ॥ ५२ ॥

ते भाविताश्चन्दनचर्चिकाभिः
कर्पूरकाश्मीरकरम्बिताभिः ।
अभ्यर्चिता दक्षिणया च माल्यै-
रभुञ्जतान्नानि रसोत्तराणि ॥ ५३ ॥

शाकौदनव्यञ्जनसूपयूष-
रसायनक्काथरसप्रभेदैः ।
भक्ष्यैरसंख्यैर्घृतशर्कराढ्यैः
फलैर्विचित्रैरपि तृप्तिमापुः ॥ ५४ ॥

ते भक्ष्यभोज्यैः खलचूर्णलेह्य-
निर्यूहपानीयगणैश्च चित्रैः ।
विस्मापिताः स्वां विधिवञ्चितेति
जातिं निनिन्दुः शतशः सुधाशाः ॥ ५५ ॥

आपृच्छमाना विबुधा मनुष्या-
नास्वादभङ्गीमभिधां रसं च ।
अत्यादरादभ्यवजह्रुरित्थ-
माश्चर्यमग्ना इव तान्पदार्थान् ॥ ५६ ॥

आकर्ण्य गर्हाममृताशनत्वे
तपःफले तत्र सुरैः प्रयुक्ताम् ।
वाताम्बुपर्णाशनवृत्तयोऽपि
वाचंयमाः स्वानि जहुर्व्रतानि ॥ ५७ ॥

अनेकवक्त्रोदरपाणिजिह्वा-
नालक्ष्य भूतेशगणानसंख्यान् ।
तद्विक्रियायै स्पृहयांबभूवु-
स्तत्र प्रजाः प्रत्यवसानसक्ताः ॥ ५८ ॥

इत्थं जगत्तर्पितमिन्दुमौलि-
र्निशम्य निर्वर्तितनित्यकर्मा ।
वध्वा समं भोजनवेदिकाया-
मुपाविशन्मङ्गलतूर्यघोषैः ॥ ५९ ॥

वाणीविरिञ्चौ कमलामुकुन्दौ
शचीमहेन्द्रौ च निषेदुरग्रे ।
हेरम्बषाण्मातुरनन्दिनस्तु
पार्श्वे निदेशेन शशाङ्कमौलेः ॥ ६० ॥

अथान्नपूर्णापरिविष्यमाण-
मन्नं शुचि स्वादु बहुप्रकारम् ।
आमोदयन्नर्मभिरन्तिकस्था-
नभुङ्क्त वध्वा सह चन्द्रचूडः ॥ ६१ ॥

स भुक्तशेषं कबलं प्रियायै
समन्त्रमेकं प्रथमं ददौ यत् ।
हेतुस्तदासीदिव भाविनीनां
तद्भुक्तशेषग्रहसंततीनाम् ॥ ६२ ॥

पक्वं फलं मान्मथमेतदद्य
जामातुरेवार्हमिति ब्रुवाणम् ।
सत्यं प्रसादेन तु माधवस्य
तल्लब्धमित्याह हसन्स शौरिम् ॥ ६३ ॥

पत्युः प्रियं बिम्बफलं विनैव
फलान्यसंख्यानि मुधाहृतानि ।
अतः पिपासा विरतास्य नेति
वाणी वधूमाक्षिपति स्म राज्ञीम् ॥ ६४ ॥

भोज्यानि यानि त्रिदिवेऽद्भुतानि
तान्याददानः स्वयमीषदीषत् ।
सासूययोरात्मजयोर्महेशः
शैलादये तत्र दयांबभूव ॥ ६५ ॥

भुक्तोत्थितो नर्मकथाभिरित्थं
विसृज्य विश्रान्तिकृते वयस्यान् ।
सज्जीकृतं प्राप तटातकायाः
शय्यागृहं सुन्दरपाण्ड्यदेवः ॥ ६६ ॥

ततो जनाः पाकगृहे नियुक्ता-
स्तत्रान्नराशीन्शतशोऽवशिष्टान् ।
आवेदयामासुरनुक्रमेण
देव्याः पुरः काञ्चनमालिकायाः ॥ ६७ ॥

कोट्यस्त्रयस्त्रिंशदिति प्रतीता
संख्या त्वियं काचन देवतानाम् ।
संख्या गणानामपि मानवानां
संख्यायते भुक्तवतां न कैश्चित् ॥ ६८ ॥

शाकेषु सूपेषु फलेष्वपूपे-
ष्वन्नेषु माध्वीगुडशर्करासु ।
शिष्टानि शक्ता न वयं प्रवक्तुं
शाधि त्वमेषामुपयोगयोगम् ॥ ६९ ॥

इतीरितं काञ्चनमालिका त-
च्चेटीभिरासूचयदात्मजायाः ।
सा च प्रियं किं क्रियतामिहेति
मन्दाक्षमन्दाक्षरमन्वयुङ्क्त ॥ ७० ॥

तामाह देवस्त्वमसीह राज्ञी
देवी त्रयाणामपि विष्टपानाम् ।
तत्तावकीमन्नसमृद्धिमेतां
भोक्तुं जनाः के मम संभवेयुः ॥ ७१ ॥

कुण्डोदरो नाम गणोऽयमेक-
स्तथापि शिष्टः परिचर्यया मे ।
भोक्तुं न यस्यावसरः पुराभू-
त्तं भोजय स्वोदरपूरमेनम् ॥ ७२ ॥

इत्यादिशन्नन्नसमृद्धिगर्व-
मपाचिकीर्षुः स नृपालपत्न्याः ।
देवो गणस्य त्रिजगच्छरीर-
वैश्वानरात्मा जठरं विवेश ॥ ७३ ॥

पौरोगवास्तत्र तया नियुक्ताः
प्रवेश्य तं भोजनमण्डपान्तः ।
विस्तार्य पत्राणि विशङ्कटानि
भक्ष्याणि भोज्यानि ततोऽभ्यवर्षन् ॥ ७४ ॥

प्राणाहुतेः पर्युपयुक्तमन्न-
मप्यत्र दृष्ट्योपलभे न यावत् ।
तावत्कथं भोक्तुमुपक्रमेये-
त्यूचे च भुङ्क्ष्वेति वदत्सु रोषात् ॥ ७५ ॥

सा पाण्ड्यदेवी सुमतिश्च तत्र
समेत्य विस्मेरविलोचनान्तौ ।
आपूपिकैरान्धसिकैश्च भूयो-
ऽप्यदापयेतां मुहुरन्नराशीन् ॥ ७६ ॥

पात्राधिकं प्रेक्ष्य स भक्तराशिं
व्यामिश्रितं व्यञ्जनशाकभेदैः ।
प्रणाहुतिं प्राथमिकीं कथंचि-
न्निर्वर्त्य तस्थौ निभृतं क्षुधार्तः ॥ ७७ ॥

संभ्रम्य दास्योऽथ नृपालपत्न्याः
संभूय संभूय यथोपलब्धम् ।
भक्ष्याणि भोज्यान्यदुरक्रमेण
पक्वान्यपक्वान्यपि धावमानाः ॥ ७८ ॥

प्राणाहुतीः पञ्च ततः कथंचि-
त्प्रसाध्य खिन्नः क्षुधया महत्या ।
स तावतीनां परिवेषणीनां
न चक्षमे तत्र गणो विलम्बम् ॥ ७९ ॥

अथान्नकूटैरभितोऽप्यसंख्यै-
रपूपशैलैश्च निरन्तरालम् ।
महानसं स स्वयमाविवेश
महाह्रदं मत्त इव द्विपेन्द्रः ॥ ८० ॥

तत्रान्नकूटान्सह भक्ष्यवर्गै-
रालोडयन्दृष्टिपथं प्रविष्टान् ।
षष्ट्या नवत्या च शतेन चैषां
स एकमेकं कबलं चकार ॥ ८१ ॥

अन्नोघयानास्तरणैः सहैव
दुग्धानि भाण्डैर्दृतिभिर्घृतानि ।
स्वीकुर्वतोऽस्माच्चकिताः समन्ता-
त्प्रदुद्रुवुः पाकगृहे नियुक्ताः ॥ ८२ ॥

सुरद्रुमाः स्वर्गगवी च तत्र
संप्रार्थ्यमाना नरपालपत्न्या ।
यान्यानसंख्यानसृजन्पदार्थां-
स्ते तेऽभवन्नस्य किलोपदंशाः ॥ ८३ ॥

गोधूममाषाढकमुद्गशालि-
श्यामाकनीवारतिलादिमानि ।
धान्यानि चान्यानि स चर्वति स्म
कुड्यैः कुसूलैर्मणिकैश्च कुम्भैः ॥ ८४ ॥

संभ्रान्तचेटीशतघुष्यमाण-
तच्चेष्टिताकर्णनजातलज्जाम् ।
अभिद्रवन्तीं स्वयमेव देवी-
मपाङ्गयन्सस्मितमास्त देवः ॥ ८५ ॥

अथ क्षणादक्षयमन्नगर्तं
ससर्ज तस्मै शफरेक्षणा यम् ।
तमप्यसौ स्थण्डिलमात्रशेषं
चक्रे महद्भिः कवलैश्चतुर्भिः ॥ ८६ ॥

अपूर्णमन्नैरुदरं ममेद-
मापूरयिष्ये सलिलेन वेति ।
कुण्डोदरे याचति पाण्ड्यकन्या
सस्मार गङ्गां तरलोर्मिसंघाम् ॥ ८७ ॥

अथाभ्रसिन्धुर्मलयाद्रिशृङ्गा-
दाविर्भवन्ती विपुलैस्तरङ्गैः ।
आप्लावयन्तीव भुवं समस्ता-
मभ्यर्णमागान्मधुरानगर्याः ॥ ८८ ॥

स पाणिना वक्त्रनिवेशितेन
तथा पपौ तामपि दिव्यसिन्धुम् ।
कौतूहलात्प्रेरयतस्तमासी-
द्गङ्गाधरस्यापि यथानुतापः ॥ ८९ ॥

स्वीकुर्वतस्तां सिकतावशेषां
सृक्कद्वयीमालिहतश्च भूयः ।
सा तस्य तां ग्लानिमवेक्षमाणा
गौरी सलज्जा गिरिशं बभाषे ॥ ९० ॥

अजानती यद्भवतः प्रभाव-
मन्नोच्चयोच्छेषमवादिषं प्राक् ।
तन्मर्षयन्मानद तर्षमेनं
कुण्डोदरस्यास्य निवारयेति ॥ ९१ ॥

व्याजेन केनापि गिरं त्वदीयां
शुश्रूषमाणो यदकार्षमित्थम् ।
तत्संहृतं देवि तव प्रभावा-
दश्रान्तपूरास्तु वियन्नदीयम् ॥ ९२ ॥

वेगागता वेगवतीति नाम्ना
ख्याता नदीयं भविता भुवीति ।
प्रसादयन्पाण्ड्यसुतां मृदूक्त्या
रेमे तया सुन्दरपाण्ड्यदेवः ॥ ९३ ॥

अथापरेद्युस्त्रिदशैः समस्तै-
रगस्त्यमुख्यैः परमर्षिभिश्च ।
पाण्ड्याधिराज्ये कलिताभिषेकः
शशास पृथ्वीं स तया महिष्या ॥ ९४ ॥

इत्थं स पाण्ड्यतनयाचरणावलम्ब-
सौभाग्यसंपदुपपन्नसमस्तराज्यः ।
देवान्विसृज्य निखिलानुचितोपचारै-
र्देवः ससागरवनां बुभुजे धरित्रीम् ॥ ९५ ॥

इति द्वादशः सर्गः ॥

# त्रयोदशः सर्गः ॥

संप्राप्येत्थं पाण्ड्यराज्याभिषेकं
सार्धं देव्या सुन्दरः पाण्ड्यदेवः ।
आसीमाद्रेर्निर्हृतारातिशल्यां
पृथ्वीं रेमे बिभ्रदेकातपत्राम् ॥ १ ॥

साब्धिद्वीपा साटवीदुर्गशैला
सर्वाप्युर्वी यत्तुलाकोटिमूर्ध्नि ।
लग्ना दृष्टा रत्नवद्बाहुना तां
तस्येदानीं बिभ्रतः कः प्रयासः ॥ २ ॥

या भूयोभिः पाण्डरैरातपत्रैः
संछन्ना भूराप संतापमन्तः ।
सैवाहृष्यच्छाद्यमाना तदानी-
मेकच्छत्रच्छायया तस्य राज्ञः ॥ ३ ॥

नायष्टारो नाकृतब्रह्मविद्या
नादातारो नाप्यधर्मे प्रसक्ताः ।
विप्राः किं तु त्यक्तपाण्डित्ययोगाः
स्थातुं बाल्ये तस्य राष्ट्रे चकाङ्क्षुः ॥ ४ ॥

चातुर्वर्ण्यं चातुराश्रम्यरम्यं
चातुर्वैद्यं तच्चतुर्वर्गयोगम् ।
दृष्ट्वा तेन स्थापितं निर्विशङ्कं
तस्थौ धर्मस्तत्र पादैश्चतुर्भिः ॥ ५ ॥

गावो धान्यं भूषणान्यम्बराणि
स्वर्णं रूप्यं यानि चैवंविधानि ।
स्वामिन्यादौ विप्रलब्धे तदीयं
सर्वं जज्ञे विप्रलब्धं तदानीम् ॥ ६ ॥

कैलासाद्रिं शासतः कल्पकोटीः
पूर्णः कोशो यस्य भिक्षाकपालैः ।
प्राप्तेनेत्थं पाण्ड्यराज्याधिपत्यं
लब्धा सद्यस्तेन लक्ष्मीरपारा ॥ ७ ॥

शैवाः शाक्ता वैष्णवाः सांख्यनिष्ठा
योगाचार्या ब्रह्मविद्याविदोऽपि ।
गत्वा गत्वा तं यथैकं प्रपन्नास्तद्व-
त्तास्ताः कीर्तयोऽपि त्रिलोक्याम् ॥ ८ ॥

येऽस्मिन्नम्रास्तेऽञ्जसा तं प्रपन्ना
ये तु द्विष्टास्ते हताः सङ्गरेषु ।
भित्त्वा भानोर्बिम्बमूर्ध्वं पतन्तः
पर्यावृत्त्य प्रापुरन्ते तमेव ॥ ९ ॥

वक्त्राम्भोजान्निःसृतं वाक्यमात्रं
पश्यन्देवो वेदवादायमानम् ।
संख्याधिक्याद्वेदशाखासु भीत-
स्तोकस्तोकं व्याजहाराप्रमत्तः ॥ १० ॥

सीमन्यम्भोविप्लवे सेतुबन्धे
गोसंचारे सार्थसंमेलने वा ।
या मीनाक्ष्या स्थापिता प्राक्प्रजानां
तां मर्यादां स प्रमाणीचकार ॥ ११ ॥

कोशान्पञ्चैवाहुरन्नादिरूपा-
न्यस्याशेषं शासतोऽमुं प्रपञ्चम् ।
संख्यातीता हेमरत्नादिरूपा-
स्तस्येदानीं तेऽभवन् पाण्ड्यभर्तुः ॥ १२ ॥

पाण्ड्याध्यक्षः पाण्ड्यजामातृदेवः
प्रेयान्राज्ञ्याः पालको द्रामिडानाम् ।
इत्याख्याभिः प्रीतिरस्याधिकासी-
दात्मब्रह्मज्योतिरादिश्रुतिभ्यः ॥ १३ ॥

या मीनाक्ष्यास्तावती राज्यशक्तिः
सा संक्रान्ता तत्र भूयश्चकाशे ।
प्राप्तोत्कर्षा सानुनि स्फाटिकाद्रेः
पत्युर्भासां भास्वरेवांशुरेखा ॥ १४ ॥

स्वे स्वे धर्मे स्थापिताः सर्व एव
क्ष्मापालत्वं बिभ्रता तेन लोकाः ।
कालस्त्वेकश्च्यावितः स्वाधिकारा-
द्धर्मैकान्त्यं तन्वता मानवेषु ॥ १५ ॥

इत्थं राज्यं बिभ्रता तेन राज्ञा
देवी जातु स्फारचिन्तानिमग्ना ।
भूयो भूयो हेतुमत्रानुयुक्ता
प्राह स्मेदं प्राणनाथं मृगाक्षी ॥ १६ ॥

संचिन्वाना तावकीनात्प्रसादा-
द्धर्मं तं तं नाथ माता मदीया ।
जातौत्सुक्या तीर्थयात्राविधाने
स्नातुं सिन्धौ श्वः प्रतिष्ठासते सा ॥ १७ ॥

इत्याकर्ण्य प्रेयसीखेदमूलं
तत्रानेष्यन्सागरान्सप्त देवः ।
सस्माराग्रे सद्य एवास्य तेऽपि
प्रादुर्भूता मूर्तिमन्तः प्रणेमुः ॥ १८ ॥

प्राचि स्थाने सोमसौन्दर्यनेतुः
प्रागेवास्ते कश्चिदेकस्तटाकः ।
सर्वे तस्मिन्संनिधत्तेति देवो
नामादेशं सागरानादिदेश ॥ १९ ॥

पश्यन्तीनामग्रतस्ते प्रजानां
त्यक्त्वा रूपं पौरुषं सिन्धुराजाः ।
दृश्यन्ते स्म व्योम्नि दूरे तरङ्गै-
राजिघ्नन्तो दिक्तटानुत्तरङ्गैः ॥ २० ॥

स्वं स्वं रूपं संक्षिपन्तोऽपि ते ते
कासारान्तः संभवार्हं समुद्राः ।
आलक्ष्यन्त स्पष्टमत्यद्भुताभि-
र्वल्गन्तीभिः पङ्क्तिभिर्वीचिकानाम् ॥ २१ ॥

आक्रामद्भिर्व्योमकक्ष्यामकाण्डे
स्रोतोभिस्तैः स्वीकृताः सागराणाम् ।
जग्मुर्मेघास्तत्र शैवालभावं
विद्युल्लेखा विद्रुमत्वं च तेषाम् ॥ २२ ॥

आसप्तर्षिस्थानमाक्रान्तिहेतोः
संवर्तेषु द्यामिव द्रष्टुकामैः ।
आरूढे व्योम्न्यर्णवैरभ्रसिन्धोः
सव्यं चक्षुः शश्वदस्पन्दतोच्चैः ॥ २३ ॥

भागीरथ्या जातु लेभेऽभिषेकं
पर्याप्तं यः प्राग्युगे व्योमकेशः ।
द्रव्यैस्तैस्तैर्दुग्धदध्याज्यमुख्यै-
र्द्वैतीयीकः सोऽस्य जज्ञेऽभिषेकः ॥ २४ ॥

पश्यत्यग्रे पाण्ड्यदेवे ततस्ते
पारावाराः पल्वले तत्र पेतुः ।
पार्श्वस्थास्तोर्त्विजः कुम्भयोनेः
प्रायस्तालुन्यार्द्रतामावहन्त ॥ २५ ॥

क्षीरं सर्पिर्वारुणीमिक्षुसारं
दध्यप्यभ्रे दुर्लभं पातुकामाः ।
विष्वग्देवाः संपतन्तो विमानैः
स्रोतस्येषां कीटमज्जं ममज्जुः ॥ २६ ॥

क्षारं वारि क्षीरमुख्यानि वस्तू-
न्येकं सर्वाण्येकदैवाजघान ।
मौढ्यं ह्येकं हन्ति राशिं गुणानां
शौर्यौदार्यस्थैर्यगाम्भीर्यमुख्यम् ॥ २७ ॥

शब्दस्पर्शौ रूपगन्धौ रसश्च
प्राप्तास्तीर्थे चित्रतां तत्र सद्यः ।
आस्तामेतन्मज्जतामत्र नृणां
स्वर्गेऽप्यासीच्चित्रता यद्विचित्रा ॥ २८ ॥

सर्वे गन्धा यत्र सर्वे रसाश्च
प्रादुर्भूतास्तीर्थराजे हि तस्मिन् ।
स्नानाल्लभ्ये तादृशि ब्रह्मभावे
न्यायज्ञानां नागमाः पर्युपास्याः ॥ २९ ॥

नीरक्षीरे द्वे विवेक्तुं प्रगल्भा
हंसास्तस्मिन्सर्वसंघातरूपे ।
भग्नोत्साहा मत्स्यमण्डूककूर्मैः
प्राप्ताः साम्यं न प्रचेलुर्विलज्जाः ॥ ३० ॥

पत्या सार्धं योषितोऽधिक्रियन्ते
तीर्थे स्नातुं पुत्रवत्योऽथवेति ।
श्रुत्वा शास्त्रं चिन्तया दूयमानां
श्वश्रूमन्तस्तत्र शुश्राव देवः ॥ ३१ ॥

आवर्तार्हं स्थानमुल्लङ्घ्य सर्वं
संप्राप्तस्तच्छाश्वतं धाम शंभोः ।
प्रत्यानेयो वल्लभोऽस्याः कथं वे-
त्यन्ताश्चिन्तामाप देवस्ततोऽपि ॥ ३२ ॥

पत्युश्छायां पाण्ड्यदेव्याः स काम-
प्यानीयाग्रे दर्शयन्प्रेयसीं स्वाम् ।
तद्वृत्तान्तस्मेरदृष्ट्यानया तां
वृत्तान्तं तं वेदयामास देवः ॥ ३३ ॥

सा संहृष्टा तां निशम्य प्रवृत्तिं
पश्यन्ती च प्राणनाथं विमाने ।
आलिङ्गन्ती निर्भरं मीननेत्रां
भूयो भूयो मूर्ध्नि चैनामजिघ्रत् ॥ ३४ ॥

त्वन्मातृत्वात्सिद्धमेवापवर्गं
मन्वानाहं तेन हृष्टा न तावत् ।
यावत्तातं वीक्षमाणा तवेति
स्तावंस्तावं सा बभाषे कुमारीम् ॥ ३५ ॥

लब्ध्वा योगं लज्जमाना विमाना-
दाप्लुत्याराादागतेन प्रियेण ।
दत्तानुज्ञा देवपाण्ड्येन देवी
सस्नौ तीर्थे सप्तरत्नाकरे सा ॥ ३६ ॥

दीनं रूपं प्रेयसा विप्रयोगा-
द्देव्याः स्नान्त्यास्तत्र दृष्टं जनैर्यत् ।
उन्मज्जन्त्यास्तत्तत: पर्यणंसी-
च्चन्द्रापीडं चारुहासं त्रिणेत्रम् ॥ ३७ ॥

सा गच्छन्ती शाश्वतं धाम शंभोः
सार्धं पत्या सर्वसौभाग्यधाम ।
क्लेशं कन्याविप्रयोगप्रसक्तं
किंचिच्चित्ते धारयन्तीदमूचे ॥ ३८ ॥

अद्य ज्ञातं ब्रह्म पूर्णं युवामि-
त्यद्योत्सन्नः पाशवर्गोऽखिलो मे ।
दूयेऽथापि त्वद्विविच्छिन्नमासी-
त्त्वत्सौभाग्यालोकभाग्यं किलेति ॥ ३९ ॥

शुश्रूषस्व प्रेयसः पादपद्मं
क्षान्त्या धृत्या प्रेमवत्या च भक्त्या ।
लब्ध्वा पुत्रं राज्यभारेऽभिषिच्य
द्रष्टास्मि त्वां स्वं पदं प्रत्युपेताम् ॥ ४० ॥

इत्यादिश्य प्रस्थितायां जनन्यां
सर्वोत्तीर्णं शांकरं धाम दिव्यम् ।
आनन्दोत्थैः शोकजैश्चाश्रुपूरै-
र्वक्त्रं देव्या भूषितं दूषितं च ॥ ४१ ॥

ताभिस्ताभिस्तत्प्रसङ्गोचिताभि-
र्वाग्भिर्मार्जन्मानसं क्लेशमस्याः ।
वारिक्रीडां वारिजाक्ष्यानयासा-
वानन्दाब्धावाचचार प्रवीरः ॥ ४२ ॥

दीनान्दानैर्देवता यज्ञभागै-
रार्तानार्तिच्छेदनैस्तत्तदर्हैः ।
जिज्ञासूनप्यात्मविज्ञानदानै-
र्देवो रक्षन्पालयामास पृथ्वीम् ॥ ४३ ॥

अन्तर्वत्नीं जातु कालेन पत्नीं
दर्शं दर्शं पिप्रिये देवपाण्ड्यः ।
केकीवाम्भःसंभृतां मेघमालां
माध्वीगर्भां पद्मिनीमप्यलीव ॥ ४४ ॥

यत्कातर्यं यौवनेनाक्ष्णि दत्तं
यच्चानीतं दौहृदेनाथ तस्याः ।
प्रागल्भ्याय प्राभवत्सर्वमेत-
त्तत्संभूतेरद्भुतं मीनकेतोः ॥ ४५ ॥

पुष्टान्यङ्गान्यापुरस्याः कृशत्वं
नित्यं कार्श्यं निर्जहौ मध्यदेशः ।
पर्यायेण ह्रासवृद्ध्योः प्रवृत्ति-
स्तत्राप्यासीदीदृशः कालभेदः ॥ ४६ ॥

अन्योन्येन स्पर्धमानावुरोजा-
वास्तामस्या यौवनोपक्रमं यौ ।
स्पर्धां मुख्यामद्य तावन्वभूतां
संघर्षेणान्योन्यमासादितेन ॥ ४७ ॥

शक्तिः ख्याता यावती या च तस्याः
सर्वाप्येषालम्भि गर्भेण नूनम् ।
नो चेदित्थं स्यात्कथंकारमस्याः
स्नातुं पातुं स्पन्दितुं चाप्यशक्तिः ॥ ४८ ॥

केन्द्रे चन्द्रे देशिके चामराणा-
मृक्षे रौद्रे रौद्रवृत्तिः परेषु ।
प्रादुर्भूतः पाण्ड्यवंशस्य भूत्यै
तस्या गर्भात्तारकारिः कुमारः ॥ ४९ ॥

आनेष्यन्ते यानि तेनात्मजेन
स्वर्णान्यग्रे मेरुमूलादमीषाम् ।
चक्रे देवः कोशगेहेऽवकाशं
भूदेवानां भूरिदानच्छलेन ॥ ५० ॥

राज्ञां पश्यन्राज्यतन्त्रास्थितानां
बालो दोषान्बाहुमुख्यप्रयुक्तान् ।
साब्धिद्वीपां पालयिष्यन्धरित्रीं
चक्रे देवः षण्मुखोऽप्यैकमुख्यम् ॥ ५१ ॥

उग्रऋक्षे जातमुग्रं प्रकृत्या-
प्युद्गन्तारं तेजसा च श्रिया च ।
जानन्बालं शासनात्कुम्भयोने-
श्चक्रे नाम्नाप्युग्र इत्येव देवः ॥ ५२ ॥

मीमांसाङ्गन्यायधर्मेतिहासैः
सार्धं वेदाः स्वस्वशाखासमेताः ।
प्राप्ते काले प्रत्यभुः पाण्ड्यसूनो-
र्द्वारं कृत्वा देशिकस्योपदेशम् ॥ ५३ ॥

दैतेयारिर्येन खड्गे विनीत-
श्चापे शिष्यो जामदग्न्यो यदीयः ।
साक्षादासीन्मेरुधन्वा स देवः
शस्त्रास्त्राणां शासिता तस्य यूनः ॥ ५४ ॥

कन्या ख्याता कान्तिमत्याख्ययासी-
द्भास्वद्वंश्या सोमचूडस्य राज्ञः ।
पित्रा दत्तां तामुपानीय देवः
पाणौ तेन ग्राहयामास यूना ॥ ५५ ॥

शक्तिर्दण्डश्चक्रमित्यायुधानि
त्रीणि प्रौढज्वालमालाकुलानि ।
दत्वा तस्मै देवदेवोऽभ्यषिञ्च-
त्प्रह्वीभूतं पाण्ड्यराज्ये कुमारम् ॥ ५६ ॥

प्रागासीद्यो देवसेनापतिः स
प्रापेदानीं पाण्ड्यसेनापतित्वम् ।
दैतेयः प्राक्तारको निर्जितोऽद्य
त्वज्ज्ञानाब्धेस्तारकस्तात एव ॥ ५७ ॥

पृथ्वीं सर्वामर्पयित्वा कुमारे
पृथ्वीं कीर्तिं केवलं गृह्णतः स्वाम् ।
सार्धं देव्या वत्सराणां सहस्रा-
ण्येवं षष्टिः षट् च तस्य व्यतीयुः ॥ ५८ ॥

इत्थं पाल्या भूमिरित्थं विजेया
दृप्ता इत्थं वर्तितव्यं त्वयेति ।
आदिश्योग्रं दंपती मूललिङ्गे
मीनाक्ष्यां च प्रापतुस्तौ प्रवेशम् ॥ ५९ ॥

तौ मीनाक्षीसुन्दरेशात्मनाथ
　　च्छन्नौ किंचित्प्रत्यहं सेवमानः ।
चक्रे राज्यं नामयन्राजवंश्या-
　　नुग्रंपश्यैः शासनैरुग्रपाण्ड्यः ॥ ६० ॥

ईजे शंभुं यच्छतेनाश्वमेधै-
　　र्येनाभुङ्क्त स्वर्गभोगान्स भूमौ ।
तेनासूयां तत्र शक्रो बबन्ध
　　प्रायेणायं पामराणां स्वभावः ॥ ६१ ॥

आक्रम्याम्भःसंप्लवै राजधानी-
　　मुन्मर्यादैरुग्रपाण्ड्यस्य राज्ञः ।
राष्ट्रं चास्य स्वीकुरुष्वेति शक्रो
　　नेदीयांसं दक्षिणाब्धिं न्ययुङ्क्त ॥ ६२ ॥

अर्धे रात्रेरप्रसक्ते कथंचि-
　　द्वर्षे वाते दुर्दिने वा क्षणेन ।
संनह्यद्भिः सर्वतो वीचिसंघैः
　　पारावारः स्वात्पदादुच्चचाल ॥ ६३ ॥

एकैकोर्मिस्पन्दमात्रादपि क्ष्मां
क्रोशं क्रोशद्वन्द्वमप्यावृणानः ।
भीमैर्घोषैर्भीषयन्नम्बुराशि-
र्ग्रामं ग्रामं मज्जयन्निर्जगाम ॥ ६४ ॥

उच्चैरुच्चैरुत्पतन्तः पतन्तो
घ्नन्तो जन्तून्गण्डशैलान्क्षिपन्तः ।
आवृण्वानाः सैकतैरद्रिकूटा-
नभ्यक्रामन्नूर्मयो वारिराशेः ॥ ६५ ॥

वल्गन्तोऽग्रे दुर्ग्रहा वीचिकानां
जातोत्साहा जन्तवः सागरीयाः ।
व्यादायास्यं व्याघ्रसिंहद्विपादी-
न्वन्यान्सत्त्वान्लीलयैवाग्रहीषुः ॥ ६६ ॥

इत्थं पुर्या योजने योजनार्धे
यावत्सिन्धुर्नाजिहीते निशीथे ।
तावत्स्वप्ने बोधितस्तां प्रवृत्तिं
सूक्त्या शंभोर्जागरामास देवः ॥ ६७ ॥

आरुह्य द्रागभ्रमातङ्गकल्पं
क्रुद्धो देवः कुञ्जरं किंचिदुच्चैः ।
पाणौ कुर्वन्शक्तिमीशेन दत्तां
पाण्ड्यः पारावारमभ्युज्जगाम ॥ ६८ ॥

शैलेनेवोत्सर्पता कज्जलानां
व्योम्नेवाधो धावता संनिपत्य ।
सोऽभूत्तेन स्रोतसा वारिराशे-
र्हृष्टो देवः सद्य एवाथ रुष्टः ॥ ६९ ॥

नायं कालः कौतुकं कर्तुमस्मि-
न्नश्यत्स्वेवं प्राणिषूच्चावचेषु ।
इत्यालोच्य प्रज्वलन्प्रज्वलन्तीं
पाण्ड्यः शक्तिं पातयामास सिन्धौ ॥ ७० ॥

शीत्कुर्वाणा सा विशन्ती समुद्रे
सर्वं पाथः संभ्रमत्कूर्मनक्रम् ।
उच्छ्वासेनैकेन यान्ती पिबन्ती
जह्रे भूमेः प्राक्तनं चार्द्रभावम् ॥ ७१॥

मर्यादाब्धेर्मा विलोपीति शक्तिं
प्रत्याहृत्य प्रज्वलन्तीं स भूयः ।
तत्संसिद्धां तावतीमप्यदत्त
क्षोणीं देवः सुन्दरेशाय सद्यः ॥ ७२ ॥

आकैलासादा च लङ्कोपकण्ठा-
ज्जाते दैवाज्जात्वनावृष्टियोगे ।
राज्ञः सर्वान्मेलयन्पर्यपृच्छ-
द्राजा पाण्ड्यः कुम्भयोनिं विधेयम् ॥ ७३ ॥

तस्यादेशादर्चनाभिः प्रणामै-
स्ते ते वृष्टिं देवराजं ययाचुः ।
दैन्यं त्वेतन्मीननेत्रात्मजस्य
स्वान्ते जातु स्वादुतां नावभार ॥ ७४ ॥

अभ्यर्णेऽसौ जातुचिच्चन्दनाद्रे-
राखेटार्थं पर्यटन्पाण्ड्यदेवः ।
स्वेच्छासीनान्पुष्कलावर्तकादी-
न्शृङ्गोत्सङ्गे तस्य मेघानपश्यत् ॥ ७५ ॥

क: सुत्रामा कात्र याच्ञा वराके
वृष्टिर्लभ्या विक्रमेणेति देवः ।
मत्वा भृत्यैर्ग्राहयन्नम्बुवाहा-
न्कारागारे वासयामास बद्धान् ॥ ७६ ॥

केचिन्मेघास्तत्र चोद्यानपालैः
केचिच्छेकान्पालयद्भिर्मयूरान् ।
आकृष्यन्त स्वैरमारक्षकाणां
सौहार्देन द्विःसकृद्गूढमह्नाम् ॥ ७७ ॥

नश्यद्गर्जा लुप्तविद्युद्विलासाः
संशुष्यन्तः साध्वसेनाम्बुवाहाः ।
धूलीजालैर्धूसरा धूमशेषा-
स्तत्रावात्सुः शासनात्तस्य राज्ञः ॥ ७८ ॥

आपातालादा च सप्तर्षिलोका-
दम्भोभिर्ये विश्वमाप्लावयन्ते ।
तानम्भोदांस्तत्र रुद्धान्निशम्य
क्रुध्यन्निन्द्रस्तेन योद्धुं प्रतस्थे ॥ ७९ ॥

ज्यानिर्घोषच्छादिताशावकाशं
बाणासारध्वस्तहस्त्यश्वयोधम् ।
रक्तस्रोत:पातरक्तं समन्ता-
ज्जज्ञे युद्धं तस्य चाखण्डलस्य ॥ ८० ॥

चापोन्मुक्तैः सायकौघैरमोघै-
र्वेधं वेधं व्योमयानादमर्त्यान् ।
यूथंयूथं पातयन्कौतुकेन
श्यैनंपातामाचचारेव वीरः ॥ ८१ ॥

येऽवागृह्णन्खेचरा वृष्टिमुर्व्यां
तेषामेवोज्ञासयन्नङ्गमङ्गम् ।
मर्माविद्भिर्मार्गणैरुग्रपाण्ड्य-
श्चक्रे वृष्टिं मज्जमांसास्रविस्राम् ॥ ८२ ॥

उन्मर्यादैरुत्पतद्भिस्तदस्त्रै:
कीर्णे विष्वक्कण्टकौघैरिवाभ्रे ।
स्थातुं यातुं स्पन्दितुं चाप्यशक्ता
तस्तम्भेऽसौ वाहिनी जम्भहन्तुः ॥ ८३ ॥

तत्कोदण्डोन्मुक्तनाराचधारा-
सद्यःकृत्तभ्रश्यदश्वेभयोधम् ।
हाहाकुर्वत्सिद्धगन्धर्ववर्गं
शौनासीरं तत्र नासीरमासीत् ॥ ८४ ॥

मर्त्या युद्धे पातिता देवभावं
लब्ध्वा देवीर्धावमाना वरीतुम् ।
धावद्देवस्त्रैणमुद्भ्रान्तबालं
चक्रुः स्वर्गं संप्रवृत्तापवर्गम् ॥ ८५ ॥

अस्त्रैरस्त्रं वारयन्नुग्रपाण्ड्यः
शस्त्रैः शस्त्रं शस्त्रिणश्चावभिन्दन् ।
जातस्तातस्याक्षिकोणात्तृतीया-
ज्ज्वालोच्चैर्जातवेदा इवान्ते ॥ ८६ ॥

पश्यन्पाण्ड्यो वज्रमिन्द्रेण दत्तं
प्रायुङ्क्तोग्रं चक्रमीशादवाप्तम् ।
तद्दम्भोलिं स्तम्भयत्तस्य मौलिं
भित्त्वा भूयः पाणिमस्याजगाम ॥ ८७ ॥

भग्ने शक्रे भग्नकोटीरकोटौ
धावत्यग्रे मुक्तकेशं सुधाशाः ।
चेलुर्विष्वक्चण्डवातावधूता
दूरे दूरे तूलपिण्डा इवाभ्रे ॥ ८८ ॥

क्रन्दद्रुन्धद्द्विपमपसरत्सैन्धवोद्धूतयोध-
प्रत्युद्धारव्यसनविमुखापेतपादातजातम् ।
धावद्देवप्रवरसमरोदन्तयाथार्थ्यबोध-
भ्राम्यत्पौरं नगरमभवज्जर्जरं निर्जराणाम् ॥ ८९ ॥

इति त्रयोदशः सर्गः ॥



# चतुर्दशः सर्गः ॥

---

तस्मिन्कुमारे मीनाक्ष्यास्तथा शासति मेदिनीम् ।
ताराग्रहाणां पञ्चानां जाता जात्वपि वक्रता ॥ १ ॥

अवागृह्णत ते वृष्टिमासेतोरा हिमाचलात् ।
जलदुर्भिक्षतश्चात्र जग्ले जानपदैर्जनैः ॥ २ ॥

सोमवारव्रतेनाथ सोमसुन्दरमीश्वरम् ।
स समाराधयांचक्रे शासनात्कुम्भजन्मनः ॥ ३ ॥

तस्य चिन्तयतः स्वप्ने तरुणेन्दुशिखामणिः ।
आविर्भूय दयासिन्धुरनुजग्राह पार्थिवम् ॥ ४ ॥

वार्षिकीयमनावृष्टिर्वक्रैः शुक्रादिभिः कृता ।
किं करिष्यति वर्षान्ते किंकरिष्यन्ति ते ग्रहाः ॥ ५ ॥

दण्डश्चण्डायुधाख्यो यो दत्तोऽस्माभिः पुरा तव ।
कनकं तेन हेमाद्रेः कणेहत्योपनीयताम् ॥ ६ ॥

इति संबोधितस्तेन प्रतिबुद्धो महीपतिः ।
प्रयाणं रोचयामास प्रातर्हेमाचलं प्रति ॥ ७ ॥

चण्डायुधं समादाय स गच्छन्निरवर्णयत् ।
भूपद्मकर्णिकाकारं भूपालः कनकाचलम् ॥ ८ ॥

निकषे व्योम्नि यं घर्षन्वेधा जलदसिक्थके ।
संयोज्यालोकतेऽद्यापि वर्णं सौदामनीच्छलात् ॥ ९ ॥

श्रीकण्ठकार्मुके यत्र शृङ्गलग्ना वियन्नदी ।
वलयीकृत्य विन्यस्ता वासुकिज्येव दृश्यते ॥ १० ॥

सर्वरत्नाकरं हैमं संरक्षितुमहर्निशम् ।
यामिकाविव चन्द्रार्कौ यं न जातु विमुञ्चतः ॥ ११ ॥

प्रस्तरा यत्र रत्नानि मृत्तिका यत्र काञ्चनम् ।
निर्झरो जाह्नवी यत्र लुब्धको यत्र शंकरः ॥ १२ ॥

यजन्ति च तपस्यन्ति यमुद्दिश्यैव देहिनः ।
यत्परं निगमस्यार्धं योऽपवर्गादनन्तरः ॥ १३ ॥

ये केचिद्द्विपदा ये च षट्पदा ये चतुष्पदाः ।
सर्वेऽप्यष्टापदमयाः संबन्धाद्यस्य विश्रुताः ॥ १४ ॥

द्यौर्मूर्धा पृथिवी मध्यं पादः पातालमण्डलम् ।
यस्य गङ्गाधरस्येयं युक्ता त्रैलोक्यरूपता ॥ १५ ॥

द्रवीभवत्सु शृङ्गेषु यत्र दावाग्निसंगमात् ।
स्वर्गास्थिरत्ववादानां प्रत्यक्षैव प्रमाणता ॥ १६ ॥

काञ्चने यत्र मृद्भूते कामिन्यस्त्रिदिवौकसाम् ।
कुतूहलिन्यो भूषासु कुलालान्पर्युपासते ॥ १७ ॥

पल्लवं जीर्णपर्णं च प्रत्यभिज्ञातुमक्षमाः ।
हैमेषु सहकारेषु खिद्यन्ते यत्र कोकिलाः ॥ १८ ॥

चामीकरैकरूपेषु सर्वेषु कुसुमेष्वपि ।
व्युत्पन्ना एव यत्रत्या गन्धेषु न मधुव्रताः ॥ १९ ॥

स तं प्रदक्षिणीकृत्य सर्वदेवालयं गिरिम् ।
तस्थौ पाण्ड्यः पुरोभागे तस्य काङ्क्षन्ननुग्रहम् ॥ २० ॥

उदासामास हेमाद्रिरुग्रपाण्ड्येऽपि पार्थिवे ।
किं चकारार्णवो रामे निसर्गोऽयं जडात्मनाम् ॥ २१ ॥

प्रकृत्यापि विनीतस्य पाण्ड्यस्योग्रस्य दण्डिनः ।
अभिख्यानुगुणं वृत्तमान्तरं करणं तदा ॥ २२ ॥

माहेश्वरं स तं दण्डं मकरद्वयलाञ्छितम् ।
आवर्त्य रुषितो वेगादाजघान सुरालयम् ॥ २३ ॥

स्थिरधन्वेति भूतेशः श्रूयते येन धन्वना ।
चकम्पे स हतस्तेन चामीकरमयो गिरिः ॥ २४ ॥

तापिते तपनालोकैस्ताडिते तेन दण्डतः ।
आसीद्दिष्ट्यात्र वैपुल्यमसंबाधाय नाकिनाम् ॥ २५ ॥

कम्पिते दण्डघातेन काञ्चने तत्र भूधरे ।
पौलस्त्यतुलितस्याद्रेः परिलुप्तमिव ह्रिया ॥ २६ ॥

हालास्यनाथतनयमवबुध्य ततः स तम् ।
स्वं रूपं दर्शयन्नाह सुविनीतं सुरालयः ॥ २७ ॥

अज्ञासिषमहं न त्वामास्थितः स्थावरं वपुः ।
जानन्निह जगत्तत्त्वं जातु न क्रोद्धुमर्हसि ॥ २८ ॥

चूर्णीकुर्या अपि त्वं मां चापं चेत्पितुरेव ते ।
स्वामिनस्तस्य सा हानिः स्वस्य किं परिहीयते ॥ २९ ॥

अस्ति मे बहुशः स्वर्णमत्यल्पमिदमुच्यते ।
अहमेव तवास्मि स्वं मनोहत्योपयुङ्क्ष्व माम् ॥ ३० ॥

इति प्रसादितस्तेन दर्शितश्च महाखनिम् ।
जग्राह विविधं हेम भित्त्वा चण्डायुधेन सः ॥ ३१ ॥

नभश्चरहयाकृष्टैर्नरदेवः परःशतैः ।
मनोभिरपि दुष्प्रापमनोभिस्तदुपाहरत् ॥ ३२ ॥

स चामीकरवर्षेण सर्वं प्रकृतिमण्डलम् ।
पालयामास नृपतिः पाण्ड्यो यावदवग्रहम् ॥ ३३ ॥

तथा ववर्ष कनकं भूयोभूयः स भूतले ।
अवग्रहं यथा नित्यमाचकाङ्क्षुः शरीरिणः ॥ ३४ ॥

स कान्तिमत्यां प्रेयस्यां चन्द्रमौलेरनुग्रहात् ।
पुत्रं यथार्थनामानं वीरपाण्ड्यमविन्दत ॥ ३५ ॥

विन्यस्य सकलां पृथ्वीं वीरपाण्ड्ये महीपतिः ।
प्रविवेश परं धाम परमानन्दलक्षणम् ॥ ३६ ॥

तस्मिन्भक्त्या च पूजाभिस्तपसा चाम्बिकापतेः ।
पुत्रादपि विशेषेण पौत्रे प्रीतिरवर्धत ॥ ३७ ॥

जिज्ञासमानाः श्रुत्यर्थं सेवया सुन्दरेशितुः ।
कण्वादयो मुनिवराः कदम्बवनमाययुः ॥ ३८ ॥

तपोभिः कर्मभिर्ध्यानैर्दानैरपि पृथग्विधैः ।
निन्युः संवत्सरं पूर्णं नियतास्ते शिवान्तिके ॥ ३९ ॥

प्रसन्नः सुन्दरेशोऽथ भक्तिक्लेशवशंवदः ।
विप्ररूपेण विप्रेभ्यो विवव्रार निजं वपुः ॥ ४० ॥

उपसन्नः स मुनिभिः संनिधौ सुन्दरेशितुः ।
व्याघ्रचर्मासनो वेदान्व्याख्यातुमुपचक्रमे ॥ ४१ ॥

अस्ति वाग्ब्रह्म तत्किंचिदखिलोत्पत्तिकारणम् ।
प्रणवोंकारतारादिपर्यायगणघोषितम् ॥ ४२ ॥

तदेकधा त्रिधा विप्राश्चतुर्धा पञ्चधा स्थितम् ।
अपि द्वादशधा भिन्नमागमेषूपदिश्यते ॥ ४३ ॥

ततो व्याहृतयस्ताभ्यो गायत्री विश्वपावनी ।
ततो वेदाः सोपभेदास्तेभ्यः सर्वं च वाङ्मयम् ॥ ४४ ॥

प्रभावं तस्य तारस्य ब्रूयां शब्देन केन वा ।
तत्प्रसूता गिरः सर्वास्तद्व्याप्या व्यापकस्तु सः ॥ ४५ ॥

एकमातृप्रसूतानामैकमत्यप्रवर्तिनाम् ।
स्ववैमत्येन वैमत्यं शास्त्राणां बालिशा जगुः ॥ ४६ ॥

अस्ति यत्परमं ज्योतिरस्मिँल्लिङ्गे तिरोहितम्।
तदेव सकलैः शब्दैस्तात्पर्यविषयीकृतम् ॥ ४७ ॥

अङ्गानि मन्त्रास्तन्त्राणि शास्त्राणि निगमा अपि।
अन्ततो लोकगाथा अप्यत्रैवायान्ति विश्रमम् ॥ ४८ ॥

इमा गिरः समस्ताश्च रुद्राय स्थिरधन्वने।
इति ब्रुवाणा वाणी वः प्रमाणमकुतोभवा ॥ ४९ ॥

सर्वानुग्राहिणी शक्तिः शंभोरनतिरेकिणी।
तामप्रपद्य तत्तत्त्वं न शब्दैरवधार्यते ॥ ५० ॥

आरोहन्त इव स्तोकमवरोहन्ति भूयसा।
जानन्त इव मुह्यन्ति तत्पादविमुखा जनाः ॥ ५१ ॥

सा वक्ति सा वाचयति सा चेतयति सा चितिः।
सा गतिः सा गमयति सैवेयं मीनलोचना ॥ ५२ ॥

तामनन्याः प्रपद्यध्वं तपोदानाध्वरादिभिः।
वाङ्मयं सर्वमेकस्थं ततो वः प्रतिभास्यति ॥ ५३ ॥

अनुगृह्यैवमीशस्तान्मस्तन्यस्तेन पाणिना।
मिषतामग्रतस्तेषां मूललिङ्गे तिरोदधे ॥ ५४ ॥

अथ कालेन महता वीरपाण्ड्यो महीपतिः ।
भूयसस्तनयाँल्लेभे भोगस्त्रीषु दुराशयान् ॥ ५५ ॥

समाराध्याथ बहुधा साम्बं हालास्यवल्लभम् ।
देवो वंशकरं पुत्रं देव्यां समुदपादयत् ॥ ५६ ॥

सर्वदा मृगयासक्तः स जातु विपिनान्तरे ।
संचरन्राजशार्दूलः शार्दूलेन निपातितः ॥ ५७ ॥

तदेव रन्ध्रमासाद्य तस्य भोगवधूसुताः ।
परिलुण्टितसर्वस्वाः पलायन्त ततस्ततः ॥ ५८ ॥

कुलवृद्धास्ततस्तस्य कुमारं पञ्चवार्षिकम् ।
अभिषेक्तुं पदे तस्मिन्नन्योन्यं सममन्त्रयन् ॥ ५९ ॥

मकुटेनाभिषेक्तव्यमभिषेकेण सुस्थिरे ।
राज्ये रत्नानि संपाद्य मकुटं कर्तुमीश्महे ॥ ६० ॥

अन्योन्याश्रयदुःस्थोऽयमभिषेकोऽस्य भाति नः ।
न मिथ्यानुग्रहः शंभोर्न विघ्नः पुनरायतिम् ॥ ६१ ॥

इति चिन्तयतां तेषामग्रतः पाण्ड्यमन्त्रिणाम् ।
आविरासीत्तदा शंभुराश्रितो वैश्यविग्रहम् ॥ ६२ ॥

स भृत्यैर्बहुभिर्वीतः समृद्धया परया ज्वलन् ।
रत्नानां वणिगस्मीति राजभृत्यानुपासदत् ॥ ६३ ॥

स भृत्यैराहृतां रत्नपेटीमुद्घाटयन्पुरः ।
वैदग्ध्यं रत्नशास्त्रेषु व्याकुर्वन्नाददे गिरम् ॥ ६४ ॥

सर्वे पश्यन्ति रत्नानि सर्वे बिभ्रति च स्वयम् ।
तत्त्वं तु ब्रह्मण इव तेषां नावैति कश्चन ॥ ६५ ॥

पशुभावं प्रपन्नस्य पाकशासितुरध्वरे ।
वलस्य देहधातुभ्यो वराद्धातुर्यदुद्भवः ॥ ६६ ॥

या वीर्याच्चन्द्रचूडस्य रत्नजातिः पुराजनि ।
या च यज्ञवराहस्य फेननिष्यन्दबिन्दुभिः ॥ ६७ ॥

या हृज्ज्वलान्महेन्द्रस्य या दधीच्यस्थिमण्डलात्
ये चाकरा भुवि स्वर्गे पाताले च पृथग्विधाः ॥ ६८ ॥

या छाया याकृतेर्निष्ठा यः स्पर्शो यच्च गौरवम् ।
यन्मानं यानि मूल्यानि ये दोषा ये च वा गुणाः ॥

ये जातिभेदा विविधा जात्याभासाश्च ये पुनः ।
ये रागकृत्रिमाः केचिद्ये च सर्वात्मकृत्रिमाः ॥ ७० ॥

यदा धार्यं यथा धार्यं यैर्धार्यं यत्र वा पुनः ।
यथा क्रयो विक्रयो वा यथा दानप्रतिग्रहौ ॥ ७१ ॥

यश्चैषां रक्षणोपायो यः परीक्षाविधिक्रमः ।
या चाप्येषामुपनिषदध्यात्ममधिदैवतम् ॥ ७२ ॥

चातुर्वर्ण्यव्यवस्था या या स्त्रीपुंसविकल्पना ।
जीवाजीवविभागो यो या मर्त्यामरभोग्यता ॥ ७३ ॥

ये च दौर्लभ्यसौलभ्ये येषामौत्पातिकी जनिः ।
यदौषधोपयोगित्वं याश्च संज्ञाः परःशताः ॥ ७४ ॥

शक्तः को वेदितुमिदं सर्वमेकं तमन्तरा ।
रत्नं समस्तदेवानां रत्नसानुशरासनम् ॥ ७५ ॥

नप्तायं देवपाण्ड्यस्य नन्वसौ पार्थिवात्मजः ।
अर्हतीदं रत्नजातममूल्यं मदुपाहृतम् ॥ ७६ ॥

अभिनिर्वर्त्य कोटीरमभिषिच्य च पार्थिवम् ।
राज्ये स्वस्थीकृते दत्त रत्नमूल्यं यथोचितम् ॥ ७७ ॥

इत्युदीर्य मणीन्दिव्यान्दत्वा तेभ्यः स काङ्क्षितान् ।
सद्यस्तिरोदधे तेषां समक्षं सपरिच्छदः ॥ ७८ ॥

चिह्नेन तेन ते सर्वे चिन्तयन्तस्तमीश्वरम् ।
प्रशशंसुः शिशोर्भाग्यं बाष्पगद्गदया गिरा ॥ ७९ ॥

सद्यो निर्माप्य ते मौलिं शास्त्रदृष्टेन वर्त्मना ।
अभ्यषिञ्चन्नृपं बालमखिला राजमन्त्रिणः ॥ ८० ॥

दृष्टया दयार्द्रयैवायं देवदेवस्य शूलिनः ।
अभिषिक्तः पुरा पश्चादभ्यषिच्यत मन्त्रिभिः ॥ ८१ ॥

तस्याभिषेकपाण्ड्याख्या तदादि भुवि पप्रथे ।
ईदृशं भक्तसौलभ्यमिन्दुचूडस्य देहिषु ॥ ८२ ॥

यदचेष्टत यत्प्राह स बालः पाण्ड्यभूपतिः ।
तत्सर्वं वरिवस्येति जग्राह मधुरेश्वरः ॥ ८३ ॥

यदवस्त यदाजघ्रौ यदभुङ्क्त यदालिपत् ।
यद्दधौ च स सर्वं तच्छिव एव निवेदितम् ॥ ८४ ॥

दिदृक्षा शिवलिङ्गेषु शुश्रूषा शिववैभवे ।
चिकीर्षा शिवपूजासु शिशोरेवास्य कौतुकम् ॥ ८५ ॥

रत्नदस्य विभोर्लिङ्गं रत्नैरेवाभ्यपूजयत् ।
अधमर्णं स्वमात्मानं स जानञ्शाश्वतीः समाः ॥ ८६ ॥

देवस्तस्मै शिलास्वेव ददौ रत्नानि कानिचित् ।
सर्ववस्तुषु रत्नानि स तस्मै समुपाहरत् ॥ ८७ ॥

वासवो जातुचित्कर्तुं वार्षिकं कमलार्चनम् ।
प्राप्तस्तेन कृतां शंभोः पश्यन्पूजामलज्जत ॥ ८८ ॥

कथान्तरे कदाचित्स कथयामास पाशिने ।
भक्तवात्सल्यमीशस्य भक्तिं पाण्ड्यशिशोश्च ताम् ॥

परीक्ष्य तद्द्वयमपि शक्रभाषितं
ततः शिवं स्वयमपि तत्र सेवितुम् ।
जलग्रहामयमृदितो जलेश्वरः
पुरं निजं पुनरगमत्सविस्मयः ॥ ९० ॥

कस्तूरीहिमवालुकाहिमपयःश्रीगन्धगोरोचना-
काश्मीरैरनुलेपितः पशुपतिः पाण्ड्यात्मजेनासकृत् ।
कस्तूरीघनसारसुन्दर इति ख्यातिं तदादि श्रितो
येनाद्यापि समीहते तनुभृतां तामेव सेवां पराम् ॥

इति चतुर्दशः सर्गः ॥

---

# पञ्चदशः सर्गः ॥

---*---

सलिलाधिपतिप्रचोदितः
  सरिदीशो मधुराजिघृक्षया ।
ववृधे विजितोऽपि सन्पुरा
  समये कस्य न संभवेद्भ्रमः ॥ १ ॥

समभिद्रवता शनैः शनैः
  सलिलानां निधिनातिभीषिताः ।
शरणं नृपतिं ययुः प्रजाः
  स च हालास्यनिकेतनं हरम् ॥ २ ॥

चतुरश्चिकुराञ्जटापदा-
  श्चतुरः स्वानवचित्य शंकरः ।
परिपश्यति पाण्ड्यभूपतौ
  विचकार त्वरितं विहायसि ॥ ३ ॥

अपिबन्नधिगत्य मेघतां
सकलं ते सलिलं सरस्वतः ।
परिशुष्क इवास्तृतः पटः
प्रदरस्थानगतं जलाञ्जलिम् ॥ ४ ॥

अपि वीक्ष्य तदद्भुतं मह-
द्वरुणो न व्यरमत्परीक्षणात् ।
विबुधेष्वपि चेदियं दशा
मतिभेदो मनुजेषु नाद्भुतः ॥ ५ ॥

प्रहिता वरुणेन तोयदाः
कृतवैरप्रतियातनेच्छवः ।
प्रलयागमभैरवै रवैः
कवलीचक्रुरिवाखिलं नभः ॥ ६ ॥

सुदृशां कलहस्पृशामपि
स्वयमालिङ्गननर्महेतुभिः
कटुभिर्ममृजे घनारवै-
स्तरुणानामपराधभीरुता ॥ ७ ॥

अपराद्धशरं शरव्यतः
　सकृदाकर्षणसन्नदोर्लतम् ।
मदनस्य चिरोज्झितं धनुः
　परिचेतव्यमिवाभवत्पुनः ॥ ८ ॥

यदुपैक्षि यदर्धदर्शितं
　यदपि प्रागथवास्ति विस्मृतम् ।
अनुतप्त इवाधुना व्यधा-
　दखिलं कर्म तदद्भुतं स्मरः ॥ ९ ॥

विधिरभ्रजलैः पुरोनिलै-
　र्वियता कैतकगर्भवर्तिना ।
तटिता नवनीपपांसुना
　व्यसृजद्धर्महतं पुनः स्मरम् ॥ १० ॥

विधुतं पवनेन चातकाः
　पतितं चञ्चुपुटे कथंचन ।
क्षुधिताः क्षुधिते पुरः शिशौ
　नवमम्भो न ददुर्न वा पपुः ॥ ११ ॥

चलितेषु सितच्छदेषु यैः
सरसि स्थातुमचिन्ति षट्पदैः ।
विरताब्जतया न तैः स्थितं
विपदन्यव्यसनार्थिनां पुरः ॥ १२ ॥

कमलं न चकास्ति कैतकं
कलहंसा न हि सन्ति केकिनः ।
न शशी ननु चास्ति मन्मथः
किमभावादिह किं विहीयते ॥ १३ ॥

कटु भेकगणेन चुक्रुशे
कलकेकामुखरेषु केकिषु ।
कवयः कवयन्तु तावता
कविपाशः किमुपैति मूकताम् ॥ १४ ॥

सरसी चिरकालशीलना-
दजहद्भिर्भ्रमरैरदृश्यत ।
क्षुभितोद्गतगर्भकर्दम-
च्छुरितेवाम्बुजिनीनिमज्जनात् ॥ १५ ॥

अवधूय दुकूलपल्लवा-
नलकानप्यभिमृश्य विश्लथान् ।
तरुणैरिव मेघमारुतै-
स्तरुणीनां ममृजे रतिश्रमः ॥ १६ ॥

चिरसंभृतचातकोदर-
ज्वलनोज्जासनलब्धजन्मभिः ।
विततैरिव धूममण्डलै-
र्वियदापूरितमम्बुदैर्नवैः ॥ १७ ॥

निबिडे चरमाङ्कमण्डले
निपतन्ती जलदस्य चन्द्रिका ।
स्थगिता चिरमक्षरत्क्षितौ
कणशः किं करकोपलात्मना ॥ १८ ॥

अतिथेरपि भाग्यतो भव-
त्यभिवृद्धिर्भवने कुटुम्बिनाम् ।
कलहंसकुले विनिर्गते
कथमासन्कमलाकरश्रियः ॥ १९ ॥

विरमत्कमलोत्पलं सरो
    व्यरुचत्पुष्पितकैतकैस्तटैः ।
गजवाजिसमाकुलं बहि-
    र्भवनं राज्ञ इवान्ततोऽधनम् ॥ २० ॥

कमलैर्विरतं कलानिधिः
    कलहंसाश्च न गोचरे दृशाम् ।
शनिरास्त ककारमस्तके
    समये तत्र कलापिनं विना ॥ २१ ॥

महिषा जहृषुर्मदागमे
    महिषैस्तुल्यधियश्च कर्षकाः ।
अभवन्तु न हंसगृह्य इ-
    त्ययशोनैल्यमिवावहन्घनाः ॥ २२ ॥

बभुरुल्लसितास्तटिल्लता
    जगदन्धंकरणीषु रात्रिषु ।
पथि चारयतोऽभिसारिकाः
    प्रसवेषोः करदीपिका इव ॥ २३ ॥

परिलुप्तरवीन्दुतारके
समये संतमसावृते सदा ।
द्युनिशोरुपदेशदेशिका
युवतीनां गृहचक्रवाकिकाः ॥ २४ ॥

स्तनिते स्तनिते पयोमुचां
कलकेकामुखराः कलापिनीः ।
अभिलक्ष्य भृशं ललज्जिरे
रभसालिङ्गितवल्लभाः स्त्रियः ॥ २५ ॥

स्थगितार्ककरैः पयोधरैः
परिलुप्तप्रसवासु वल्लिषु ।
पवनापहृताः पयःकणा
मदनस्यास्त्रपदेऽभिषेचिताः ॥ २६ ॥

नवतोयनिपातहर्षितां
नगरीं तामवलोक्य कुप्यतः ।
अथ ते वरुणस्य शासना-
दतिमात्रं ववृषुः पयोमुचः ॥ २७ ॥

परमां सखितां प्रचेतसः
प्रतिपेदेऽग्निसखः समीरणः ।
समयानुगुणैव शत्रुता
सखिता वा त्रिदिवौकसामपि ॥ २८ ॥

परिपाटितकाननद्रुमाः
परिकृष्टेभगवाश्वमानवाः ।
सरितः परितो जजृम्भिरे
विकटावर्ततरङ्गसंकुलाः ॥ २९ ॥

गणशः पशुपक्षिमानवा-
न्गणशो ग्रामपुराश्रमालयान् ।
पवमानसखाः पयोमुचः
पणबन्धादिव पर्यपातयन् ॥ ३० ॥

न दिशो विदिशो न पादपा
न समुद्राः सरितो न पर्वताः ।
न दिवा न निशा न चान्ततो
जगदप्यैक्षत मध्यमं तदा ॥ ३१ ॥

अथ पाण्ड्यसुते समं जनैः
शरणं जग्मुषि चन्द्रशेखरः ।
स्वकपर्दभवैः पयोधरैः
स्थगयामास स वर्षतो घनान् ॥ ३२ ॥

पटमण्डपवद्व्यवस्थिताः
परितस्ते मधुरां पयोमुचः ।
रुरुधुर्भुवि वारिसंप्लवं
जगृहुश्चोपरि निष्पतत्पयः ॥ ३३ ॥

पटगर्भगता इव प्रजाः
कियदप्यश्रुतवर्षनिस्वनाः ।
व्यजनैरुपवीज्य लेभिरे
नगरस्था मरुतं कथंचन ॥ ३४ ॥

अपि यत्प्रलयेषु वर्षितुं
समरक्षन्सलिलं वलाहकाः ।
अभिवृष्य तदप्यशेषतो
गृहधूमा इव खे चकाशिरे ॥ ३५ ॥

प्रथमं पतितैः पयोभरैः
परमम्भोधिरपूरि शोषितः ।
चरमं पतितं तु तत्पयो
जगृहुः शैवकपर्दवारिदाः ॥ ३६ ॥

जलदा जलदैर्निराकृताः
प्रतियान्तः परितो यथागतम् ।
वरुणेन न संबभाषिरे
वरुणस्तैरपि लज्जया मिथः ॥ ३७ ॥

परितो विनिवेशितान्घना-
न्प्रतिसंहृत्य निजान्महेश्वरः ।
परिदर्शयति स्म नागरैः
प्रकृतिस्थं निखिलं महीतलम् ॥ ३८ ॥

चतसृष्वपि दिक्षु कूटव-
ज्जलदान्यस्य ररक्ष यत्पुरीम् ।
तदुपक्रममभ्ययोजय-
त्स चतुष्कूटसमाख्ययापि ताम् ॥ ३९ ॥

अतिमानुषदेवदानवं
वरुणो वीक्ष्य तदद्भुतद्वयम् ।
मघवोदितमीशवैभवं
मनसामन्यत दिक्प्रदर्शनम् ॥ ४० ॥

स समेत्य सुवर्णपद्मिनीं
सलिलस्नानगलज्जलग्रहः ।
कनकाम्बुरुहैस्तदुद्भवैः
कलयामास महेश्वरार्चनम् ॥ ४१ ॥

स्तुतिभिर्बहुभिः प्रसादय-
न्स महेशं शफरेक्षणामपि ।
कृतपाण्ड्यनृपालसौहृदः
कृतकृत्यः स्वपुरं पुनर्ययौ ॥ ४२ ॥

अथ जात्वभिषेकपाण्ड्यभू-
रमणे शासति राज्यमूर्जितम् ।
समदृश्यत सिद्धवेषभृ-
त्सह शिष्यैर्मधुरापुरे हरः ॥ ४३ ॥

जपदामकरो जटाधरः
कलयन्काञ्चनवेत्रमुज्ज्वलम् ।
विचचार युवातिसुन्दरो
भसितालेपनपाण्डरच्छविः ॥ ४४ ॥

करुणैकमयः कलानिधिः
सुलभः सुन्दरमूर्तिरुज्ज्वलः ।
अवलोकित एव देहिना-
महरद्धाञ्जनसे स तापसः ॥ ४५ ॥

बहुशः कुणिमूकलोहला
बधिरक्लीवजडान्धपङ्गवः ।
जटिलेन कृतार्थिता जना-
श्चरणाम्भोजरजोऽनुषङ्गतः ॥ ४६ ॥

चरणोदकसेवया हर-
न्नपि वन्ध्यत्वमनेकधा स्थितम् ।
अवसन्नतरं हराश्चिरा-
दनुजग्राह कुलं कुटुम्बिनाम् ॥ ४७ ॥

जरतस्तरुणान्प्रकल्पय-
न्युवभावं युवसु स्थिरं दिशन् ।
अपि वर्षगणानुवर्तिनीः
शमयामास रुजः स भस्मना ॥ ४८ ॥

भसितं रसनासु निक्षिप-
न्कवयामास जडाननेकधा ।
विततार परां विरक्ततां
विषयासङ्गमलीमसात्मनाम् ॥ ४९ ॥

अपि दुर्लभभैक्ष्यजीवना-
नकरोदाढ्यतरान्गिरैव सः ।
उदजीवयदुक्षणादपा-
मुरगक्ष्वेलहतानपि क्षणात् ॥ ५० ॥

पतिवल्लभतां मृगीदृशां
प्रमदासु प्रियतां विलासिनाम् ।
व्यतरद्भिषजां च मूलिका
विविधप्रत्ययकारिणीर्हरः ॥ ५१ ॥

घुटिकांशुकखड्गपादुका-
रसलेपाञ्जनमुख्यसिद्धयः ।
तमनुस्मरतां शरीरिणां
स्वत एव प्रचकाशिरे तदा ॥ ५२ ॥

ग्रहभूतपिशाचयक्षिणी-
गणकूश्माण्डविनायकादयः ।
अभिदुद्रुवुरादिसिद्ध इ-
त्यभिधानाक्षरकीर्तनान्नृणाम् ॥ ५३ ॥

स जगाद दृशोरगोचरः
कथयन्नेव कथास्तिरोदधे ।
स्थविरस्तरुणोऽथ मुण्डितो
जटिलश्चैष जनैरदृश्यत ॥ ५४ ॥

समदर्शयदुन्नतान्गिरी-
न्सविधे वारिनिधीन्वनानि च ।
स्तुवतां हसतां प्रधावतां
मिषतामेव तदुन्ममार्ज सः ॥ ५५ ॥

कियदित्यभिदध्महेऽद्भुतं
किमितीदं चरितं स्तुवीम वा ।
वयमप्युपदर्शयेम त-
द्यदि हि स्याम जगच्छरीरिणः ॥ ५६ ॥

इति केलिकलाकुतूहली
विजहारैष यथा यथा पुरे ।
अशृणोदखिलं तथा तथा
प्रकृतिभ्यो नृपतिः पदे पदे ॥ ५७ ॥

स कदाचन सुन्दरेशितु-
र्वितते धाम्नि विमानपश्चिमे ।
उपविष्टममुं यदृच्छया
नृपतिः प्रैक्षत सेवितुं गतः ॥ ५८ ॥

दृशमस्य तृणीकृतामरां
गिरमज्ञातपरानुवर्तनाम् ।
स्थितमीप्सितगन्धदुर्विधं
परिपश्यन्नृपतिर्विसिष्मिये ॥ ५९ ॥

अतिवाङ्मनसैर्महोभरै-
रपि तत्त्वं परमस्य सूचितम् ।
अधिगन्तुमना: स्वयं मना-
गनुयुङ्क्ते स्म स गोत्रनामनी ॥ ६० ॥

श्रवणे दधदक्षमालिकां
शिथिलीकृत्य स पद्मासनम् ।
अमृतस्नपितैरिवाक्षरै-
रिदमाह स्म नृपं तपोधन: ॥ ६१ ॥

न कुलं न गृहं न बान्धवा
न च वर्णाश्रमयन्त्रणापि न: ।
अवधूतपदे निषेदुषा-
मभिधा सिद्ध इति स्फुटैव ते ॥ ६२ ॥

चतुरुत्तरषष्टिभेदत:
प्रथिता या भुवने कला इति ।
यदि तासु कुतूहली भवा-
नभिसंपश्यतु सिद्धिमद्भुताम् ॥ ६३ ॥

इति वादिनि योगिनां वरे
पुनरूचे नृपति: कुतूहली ।
उपदीकृतमिक्षुमायतं
कमनीयं कलयन्करेण तम् ॥ ६४ ॥

अयमस्ति विमानधारको
द्विरदो य: किल दार्षद: पुर: ।
इममिक्षुमसौ गिलत्विति
स्मयमान: स तदन्वमन्यत ॥ ६५ ॥

स तत: पुरत: शिलागज:
स्तनितस्निग्धगभीरबृंहित: ।
नरपालकराग्रवर्तिनं
नवमिक्षुं विचकर्ष शुण्डया ॥ ६६ ॥

कबलीकृतकोमलेक्षुणा
करिणा तत्र विमानवर्तिना ।
जगृहे नृपकण्ठमालिका-
मणिहारोऽपि मृणालकोमल: ॥ ६७ ॥

चकिताः स्तिमिताः पलायिता
रुषिताश्चानुचरा महीपतेः ।
उपलद्विरदस्य चेष्टिता-
न्युपलभ्य क्षुभिताः प्रचुक्रुशुः ॥ ६८ ॥

न निकर्षचिकीर्षया कृतं
न परीचिक्षिषया न गर्वतः ।
कुतुकेन तु वृत्तमेतदि-
त्यसकृत्तं प्रणमन्नसान्त्वयत् ॥ ६९ ॥

नमते धरणीभृते वरं
तनयं वंशकरं प्रसादयन् ।
स्मयमानमुखाम्बुजो हरो
मिषतस्तस्य पुरस्तिरोदधे ॥ ७० ॥

अथ विक्रमपाण्ड्यभूपति-
स्तनयोऽभूदभिषेकपाण्ड्यतः ।
उदितोदितमुद्वहन्कुलं
कुलदासः कुसुमायुधद्विषः ॥ ७१ ॥

स पितुः परलोकमेयुष-
श्चरमाज्ञां शिरसोपधारयन् ।
अनुपाधिमनन्यगामिनी-
मचलां भक्तिमधत्त शंकरे ॥ ७२ ॥

शिवनामपरः शिवाश्रयः
शिवविन्यस्तभरः शिवाश्रमी ।
जगदाकलयञ्शिवात्मकं
जननाथो बुभुजे वसुंधराम् ॥ ७३ ॥

शशिनीव समस्तवल्लभे
नृपतौ भूतपतेः प्रणम्नरि ।
पितरीव सुता महीभुजो
बिभरामासुरविप्लुतां मतिम् ॥ ७४ ॥

कुलशेखरपाण्ड्यसम्नमं
नृपतिं तं किल चोलपार्थिवः ।
न ममर्ष शरद्विनिर्मलं
शशिनं चोर इव स्वदोषतः ॥ ७५ ॥

अतिवर्तितुमेनमक्षमः
स वराकः समरे भुजोष्मणा ।
क्षपणैः क्रतुमाभिचारिकं
कलयामास पयस्विनीतटे ॥ ७६ ॥

तत उच्चलितो दुरध्वरा-
द्द्विरदः कोऽपि गिरीन्द्रभीषणः ।
समया मधुरामुपाद्रव-
त्कलयन्मुद्गरमायसं करे ॥ ७७ ॥

तमुदन्तमयं विचारय-
ञ्शरणं प्राप शशाङ्कशेखरम् ।
स च तत्र किरातरूपभृ-
त्परिचक्राम निजालयाद्बहिः ॥ ७८ ॥

वनपल्लवभङ्गशेखरं
वरगुञ्जाफलपुञ्जभूषणम् ।
अधिरोपितकार्मुकं जना
ददृशुर्दिव्यममुं वनेचरम् ॥ ७९ ॥

उपलभ्य गजं तमुद्धतं
पथि गव्यूतियुगे व्यवस्थितम् ।
नरसिंहमयोजयच्छरे
नरसिंहस्य मुदे वनेचरः ॥ ८० ॥

त्रिपुरेषु गतेषु लक्ष्यतां
हसितेनास्मि पुराप्यपोदितः ।
इति सत्वरमीशकार्मुका-
दुदयासीद्दनुजान्तकः शरः ॥ ८१ ॥

स हसन्नचलेन धन्वना
विशिखेन स्वयमच्युतेन च ।
जगदेकधनुर्धरः क्षणा-
दभिनत्सिन्धुरमाभिचारिकम् ॥ ८२ ॥

नरकेसरिणास्त्ररूपिणा
शमिते हस्तिनि शैलतां गते ।
तमनु प्रहितास्तथागता
न समैक्ष्यन्त यथा तथा गताः ॥ ८३ ॥

सुगतान्सुगतात्मनैपुणा
स विजिग्ये चतुरो वनेचरः ।
अहिरेव हि वेत्त्यहेः पदं
कथमन्येन घटेत तज्जयः ॥ ८४ ॥

विदितः किल सर्वदेहिनां
विजयः पञ्चमुखेन हस्तिनः ।
गुणगृह्यतया तदप्यसौ
मुमुदे विक्रमपाण्ड्यपार्थिवः ॥ ८५ ॥

अनुगृह्य दयार्द्रया दृशा
प्रणतं भूतपतिः प्रजेश्वरम् ।
तनयं च तदन्वयोचितं
वरमस्मै वितरंस्तिरोदधे ॥ ८६ ॥

अजनिष्ट विभोरनुग्रहा-
त्तनयस्तस्य च राजशेखरः ।
यदुपाहितभूभरो गुरुः
प्रतिपेदे पदमैश्वरं परम् ॥ ८७ ॥

सप्तमो मलयध्वजस्य स सप्तसप्तिसमद्युति-
विभ्रदङ्गदनिर्विशेषमशेषमेव महीतलम् ।
आरराध सभाजनैरतिमानुषैर्मधुरेश्वरं
रञ्जयञ्जनताः सुतानिव राजशेखरपार्थिवः ॥ ८८ ॥

इति पञ्चदशः सर्गः ॥



## षोडशः सर्गः ॥

अथ क्षितिं बिभ्रति राजशेखरे
द्विजो विरूपाक्ष इति प्रथां गतः ।
चिराय शंभुं तपसा प्रसादय-
न्नवाप गौरीत्यभिविश्रुतां सुताम् ॥ १ ॥

स कन्यया जात्वपि पञ्चवर्षया
समेत्य तातस्तपसेऽभियाचितः ।
अदेयमप्येवमपत्यसौहृदा-
ददिक्षदेकाक्षरमम्बिकामनुम् ॥ २ ॥

भवप्रवाहप्रतिपन्नवासना-
प्रबन्धयोगेन कुमारिकापि सा ।
असाधयन्मन्त्रमशेषसिद्धिदं
जगन्निदानं जपयज्ञनिष्ठया ॥ ३ ॥

गुरौ वसन्तं कृतभैक्षवृत्तिकं
कदाचिदेकं गृहमागतं वटुम् ।
अवेक्ष्य तस्मै गुरुरात्मजामदा-
दचिन्तयित्वा कुलशीलबन्धुताम् ॥ ४ ॥

दुरागमाभ्यासविलुप्तसत्पथे
महेश्वरद्वेषमलीमसात्मनि ।
दधीचिशापोपहते द्विजान्वये
प्रसूतमेनं बुबुधे ततस्तु सः ॥ ५ ॥

अलङ्घनीयं शिवशासनं सुरै-
रपि स्वयंभूविबुधेश्वरादिभिः ।
स चिन्तयन्स्वोचितदानसत्कृतां
सहोपयन्त्रा प्रजिघाय कन्यकाम् ॥ ६ ॥

अथ स्नुषामात्मभुवा स्वयं हृता-
मवेक्ष्य फाले भसितेन लाञ्छितां ।
शिवद्विषौ तच्छ्वशुरौ ज्वलद्रुषौ
निवेशयामासतुरालये पृथक् ॥ ७ ॥

शिवार्चनध्यानकथाविवर्जिते
श्मशानतुल्ये सदने तु तत्र सा ।
अमङ्गले सत्यपि सर्वमङ्गला-
मनुस्मरन्ती दिवसानि चिक्षिपे ॥ ८ ॥

ततः सदारे श्वशुरे बहिर्गते
कदाचिदेनां सदने निषेदुषीम् ।
प्रहर्षयन्प्रादुरभूद्द्विजात्मना
विभूतिरुद्राक्षविभूषितो हरः ॥ ९ ॥

तमातिथेयीभिरसौ सभाजय-
न्त्युपास्त यावज्जरठं द्विजर्षभम् ।
विवेश तावच्छ्वशुरस्तमालयं
स च द्विजोऽदृश्यत सुन्दरो युवा ॥ १० ॥

ततः शिवानुस्मरणैकसाधनां
स वेपमानामभिलक्ष्य तां हरः ।
स्तनंधयोऽदृश्यत तत्समीपतः
स्वरेण तस्याः श्वशुरावमर्षयन् ॥ ११ ॥

ततस्तु पृष्टा प्रतिवेशिनीसुतं
तमालपन्ती श्वशुरेण कुप्यता ।
बहिर्निरस्ता शिशुनामुना समं
निनाय पर्यश्रुमुखी निशामसौ ॥ १२ ॥

भवस्य तं पश्चिमवक्त्ररूपिणं
शिशुं स्मरन्तीं हृदि विप्रकन्यकाम् ।
निनाय कल्ये निजमास्पदं शिवो
वृषेण विस्मापितविष्टपत्रयः ॥ १३ ॥

स्तनंधयं देवमुपास्य सा जहौ
स्तनंधयत्वं भवसंघसंचितम् ।
क्रमेत शंभाववितर्क्यवैभवे
क्व तत्क्रतुन्यायविदुक्तिपद्धतिः ॥ १४ ॥

मनुं किल द्यक्षरमाचचक्षिरे
प्रभुं प्रजासर्गविधौ पुराविदः ।
अयं तु सृष्टिस्थितिसंहृतिक्षमो
मनुं यमेकाक्षरमारराध सा ॥ १५ ॥

कदापि देवः करिकालचोलतो
निशम्य नृत्तानभियुक्ततां निजाम् ।
बभूव सद्यो नटसूत्रपारगः
किमादिशैलूषकुले तदद्भुतम् ॥ १६ ॥

शिवे प्रसक्ते सति शैवरात्रिके
महाव्रते मन्दिरमैशमाश्रितः ।
प्रसन्नमभ्यर्चनया हरं पुनः
प्रसादयिष्यन्प्रणनर्त पार्थिवः ॥ १७ ॥

उदञ्चिताकुञ्चितसव्यपादिका-
चिरानुवृत्तिश्रमखिन्नमानसः ।
श्रमं तमीशोऽपि समं व्यचिन्तय-
त्स हि स्वयं पश्यति शंभुमात्मवत् ॥ १८ ॥

निधाय सव्यं निभृतं पदं क्षिता-
वुदञ्चयन्दक्षिणमङ्घ्रिमुच्चकैः ।
नटन्नुदस्व श्रममित्यनुक्षणं
नटेश्वरं प्रार्थयते स्म पार्थिवः ॥ १९ ॥

अदर्शितस्पन्दमथेषदप्यमुं
  नटेशबिम्बं कलयन्नरेश्वरः ।
कृपाणकृत्तेन निजेन मौलिना
  स देवमाराधयितुं समैहत ॥ २० ॥

न किंचिदानन्दमयं स वेद तं
  न वा किमर्चास्वनपायिनीं स्थितिम् ।
तथापि तस्याभवदीदृशी मति-
  स्तथा हि भक्तिस्तपसापि दुर्लभा ॥ २१ ॥

अवेक्ष्य दुर्भेदममुष्य निश्चयं
  तथा स देवः प्रससाद नर्तितुम् ।
न दुर्लभा तस्य कदापि वश्यता
  सुदुर्लभा तु स्थिरशीलतैव नः ॥ २२ ॥

अनन्यथात्वं वृतमात्मकर्मणा-
  मपि त्यजन्दूरत एव शंकरः ।
यथा स मेने हृदि राजशेखर-
  स्तथा विपर्यस्य ननर्त तत्क्षणम् ॥ २३ ॥

निधाय सव्ये निखिलं भरं तनोः
पदे यदास्त प्रकृतिस्तु तस्य सा ।
प्रपञ्चसर्गस्थितिभङ्गभारम-
प्ययं हि तत्रैव निवेश्य निर्वृतः ॥ २४ ॥

तदद्भुतं ताण्डवमैन्दुशेखरं
प्रसादतस्तस्य सिषेविरे जनाः ।
गणेश्वरास्ते विषये महीपते-
र्वसन्ति ये शंकरभक्तिशालिनः ॥ २५ ॥

बबन्ध भक्तिं स्वकृते कृते नृपो
विशिष्य तस्मिन्विपरीतताण्डवे ।
तदादि तद्वंशभुवोऽपि पार्थिवा-
स्तमेव देवं शरणं प्रपेदिरे ॥ २७ ॥

प्रमार्ष्टुमागः शतशः समर्पय-
न्पतिः प्रजानां मणिभूषणानि सः ।
सुतं कुलोत्तुङ्ग इति श्रुतं ततो
वरेण लेभे नचिरेण शूलिनः ॥ २७ ॥

गते धरित्रीभृति राजशेखरे
गतिं समाख्याविधयैव सूचिताम् ।
कुलोचितोत्तुङ्गगुणाकरश्चिरा-
द्दधौ कुलोत्तुङ्गमहीपतिः क्षितिम् ॥ २८ ॥

गुणेन शीलेन कुलेन चोन्नतं
तमीक्षमाणाः क्षितिपास्ततस्ततः ।
उपाहरन्स्वस्वकुमारिकाः स्वत-
स्ततोऽयुतं तस्य बभूवुरङ्गनाः ॥ २९ ॥

स तासु लेभे सकलासु पार्थिवः
समानरूपान्वयशीलवृत्तिषु ।
कुलोचितौदार्यविवेकशालिनां
कुमारकाणामयुतानि षट् ततः ॥ ३० ॥

अजायतानन्तगुणाख्यया श्रुत-
स्तनूभवानां प्रथमो धरापतेः ।
तदाश्रितास्तच्चरणार्पितासवः
परेऽपि तत्तुल्यगुणा विजज्ञिरे ॥ ३१ ॥

यदीदृशी दारसमृद्धिरीदृशी
कुलाभिवृद्धिश्च बभूव भूपतेः ।
इदं हि लीलायितमिन्दुशेखर-
प्रसादलेशप्रतिलम्भसंपदः ॥ ३२ ॥

स वीरभद्रः स्वशरीरसंभवैः
स्वतुल्यतेजोनिधिभिर्गणैरिव ।
समं कुलोत्तुङ्गमहीपतिः सुतैः
शशास सर्वाञ्छिवशासनद्विषः ॥ ३३ ॥

अथ द्विजः कश्चन बालपुत्रया
समं गृहिण्या मधुरां समासदत् ।
तले वटस्यास्त विशालशीतले
क्वचित्कठोरातपतापतापितः ॥ ३४ ॥

असंचरत्पान्थमनालपद्द्विजं
सरोजकोशोदरलीनषट्पदम् ।
प्रतप्तहेमप्रतिमं समस्तम-
प्यभूदहर्मध्यगते जगद्रवौ ॥ ३५ ॥

ज्वलद्विनापि ज्वलनेन भूतले
मदान्धभद्रेभनखंपचं रजः ।
अवेक्षमाणैर्नयनैः शरीरिणा-
मतिप्रतेपे दहनाहतैरिव ॥ ३६ ॥

स गेहिनीं बाहुलतोपधायिना
कुचाग्रविन्यस्तमुखेन सूनुना ।
तले शयानां तृषयार्दितां तरो-
रवेक्ष्य हर्तुं सलिलं ययौ बहिः ॥ ३७ ॥

स किंचिदासाद्य सरोऽतिनिर्मलं
हरञ्जलं पद्मदलेन शीतलम् ।
ददर्श विद्धां दयितां महेषुणा
रुदन्तमस्याः शिशुमप्युरःस्थले ॥ ३८ ॥

प्रियावियोगव्यसनाभिमूर्छितः
स यावदन्विष्यति तत्र कारणम् ।
ददर्श तावन्मृगयाविहारिणं
धनुर्धरं लुब्धकमेकमन्तिके ॥ ३९ ॥

अनेन नूनं दयिता ममाहृते-
त्यवेत्य केशेषु परामृशन्नमुम् ।
उपेत्य राज्ञः प्रतिहारमुच्चकै-
र्द्विजः प्रचुक्रोश विषादविह्वलः ॥ ४० ॥

ततः कुलोत्तुङ्गनृपस्तदद्भुतं
निशम्य खिन्नः पृथगन्वयुङ्क्त तौ ।
न निश्चिकायैकमथाभियोक्तरि
द्विजे किराते च दृढं मृषोत्तरे ॥ ४१ ॥

न तत्त्वमत्र व्यवसातुमीश्महे
विना प्रसादाद्गिरिजापतेरिति ।
निरुध्य लुब्धं शमयन्द्विजं गिरा
नृपः प्रपेदे शरणं पिनाकिनम् ॥ ४२ ॥

द्विजद्वितीयो नगराद्बहिश्चर-
न्निशि त्वमस्यामुपलप्स्यसेऽखिलम् ।
इतीरितो भूपतिरिन्दुमौलिना
स वैश्यवीथ्यामचरत्कचिद्बहिः ॥ ४३ ॥

ततः क्वचित्संवदतोर्द्वयोर्मिथः
कथां स शुश्राव कृतान्तदूतयोः ।
निनीषतोर्वैश्यगृहे वरं क्षणा-
त्प्रवृत्तवैवाहिकमङ्गलावधौ ॥ ४४ ॥

शरव्यमुद्दिश्य शकुन्तमेककं
पुरा पुलिन्देन चिरार्पितः शरः ।
वटद्रुलग्नः पवनाहतः पत-
न्यथावधीद्विप्रवधूमतर्कितम् ॥ ४५ ॥

तथाद्य वैवाहिकतूर्यनिस्वनैः
परिभ्रमन्त्यात्र गवा निपातितम् ।
वरं समादाय करग्रहावधौ
पुनर्निवर्तेवहि तत्क्षणादिति ॥ ४६ ॥

सुविस्मितस्तेन सह द्विजन्मना
स्वसंशयच्छेदकरीं गिरं तयोः ।
निशम्य संवादकृते नृपः क्षणं
प्रतीक्ष्य तस्थौ वरपातनक्षणम् ॥ ४७ ॥

तथैव वृत्तेऽत्र कृतान्तचेष्टिते
धनैः प्रभूतैः परितोष्य स द्विजम् ।
विसृज्य च व्याधमनुग्रहं विभो-
रशेषमावेदयति स्म मन्त्रिषु ॥ ४८ ॥

विधुः कलङ्की वियति भ्रमन्नसौ
कलङ्कशङ्कापि न शंकराश्रिते ।
अतो न ते स्यादपवादभीरिति
प्रशंसितः पाण्ड्यनृपः स मन्त्रिभिः ॥ ४९ ॥

निवेशितोऽनन्तगुणोऽथ मन्त्रिभिः
पदे पितुः शांकरमेयुषः पदम् ।
स रत्नकेयूरवदावहद्भुजे
चतुःसमुद्रीपरिवेष्टितां भुवम् ॥ ५० ॥

द्विजाधमः कश्चिदवन्तिषु स्थितः
स्वमातृसक्तस्तदमर्षिणं गुरुम् ।
निहत्य हृत्वा निखिलं च तद्धनं
निशि प्रतस्थे सह मातृपाशया ॥ ५१ ॥

तमध्वनि व्याधभटा मदोद्धटाः
प्रहृत्य सर्वस्वमथापहृत्य च ।
अपि स्त्रियं तामवरुध्य सुन्दरी-
महासिषुस्तं तनुमात्रशेषितम् ॥ ५२ ॥

कदन्नभिक्षाधिगमाऽव्यवस्थया
कृशो रुजार्तः कृपणो दिगम्बरः ।
परिभ्रमन्दिक्षु कदाचिदानशे
स भाग्ययोगेन कदम्बकाननम् ॥ ५३ ॥

अयत्नमाच्छादनमन्नमप्यसौ
प्रविष्टमात्रो नगरीमविन्दत ।
अनुग्रहान्मीनदृशोऽधुनापि य-
न्न तत्र कश्चित्क्षुधितो न दुःखितः ॥ ५४ ॥

स संचरञ्जातु किरातदंपती
विलासिनौ विश्वविलक्षणश्रियौ ।
ददर्श दिष्ट्या निशि नर्मतत्परौ
महेशधामप्रतिहारसीमनि ॥ ५५ ॥

स तत्र विस्रम्भमवाप्य सँल्लप-
न्यवेदयत्स्वं निखिलं विचेष्टितम् ।
ततः किरातीवचनानुवर्तिना
किरातयूनेत्थमबोधि निष्कृतिम् ॥ ५६ ॥

न कर्मयोगैर्न तपःशतेन वा
विनेतुमंहस्तव विप्र पार्यते ।
दुरुत्तरं दुष्कृतमप्यमुं शिवं
प्रपद्य वर्षैस्त्रिभिरुत्तरिष्यसि ॥ ५७ ॥

इतीरयित्वैव तिरोहितं क्षणा-
दवेक्ष्य तद्द्वन्द्वमपास्तसंशयः ।
अवाललम्बे दृढमम्बिकासखं
स विप्रबन्धुः शरणं शरीरिणाम् ॥ ५८ ॥

जपार्चनध्याननतिप्रदक्षिण-
स्तवैः स तिस्रः शरदो निरन्तरम् ।
प्रसाद्य देवं प्रमथैः पुरौकसां
समक्षमानीयत शांकरं पुरम् ॥ ५९ ॥

विशन्पुरीमेव विधूतपातकः
सकृत्प्रणम्यैव शिवं गणोऽभवत् ।
परं तु वैदेशिक एष वत्सरा-
न्प्रतारितस्त्रीनिति पौरवागभूत् ॥ ६० ॥

अनुस्मरन्स्वं चरितं विसिष्मिये
स नीयमानः प्रमथैः शिवान्तिकम् ।
विमृष्टमर्मा तु शिवे न्यवेशय-
त्ततस्त्रिवर्षार्चनयाधमर्णताम् ॥ ६१ ॥

अथाङ्क इत्यस्त्रविदां पुरोगमो
गुरुर्भटानां खुरलीषु विश्रुतः ।
बहून्समध्यापयदस्त्रसंहितां
प्रयोगसंहाररहस्यकोविदः ॥ ६२ ॥

बभूव शिष्येष्वमितेषु सिद्ध इ-
त्यभिख्यया कश्चन तस्य वल्लभः ।
तमस्त्रशस्त्रेषु विशिष्य पुत्रव-
द्गुरुर्व्यनैषीदविदन्दुराशयम् ॥ ६३ ॥

स दुर्मतिः स्वं गुरुमप्रकाशय-
न्प्रकाशयन्स्वां पटुतां तदाहिताम् ।
अपि स्वशिष्या इति शस्त्रकोविदा-
न्भटान्सतीर्थ्यान्प्रलपंश्चचार सः ॥ ६४ ॥

कदाचिदङ्कस्य सदा सदाशिव-
प्रणामहेतोर्वसतः शिवालये ।
उपेत्य गेहं युवतिं च तत्प्रियां
रहो जिघृक्षन्ननयावधीरितः ॥ ६५ ॥

तमङ्करूपं परिगृह्य जातुचि-
द्दुराशयं द्वन्द्वरणे निबर्हितुम् ।
पुराद्बहिः पश्यति पौरमण्डले
कृपाणपाणिर्युयुधेऽमुना हरः ॥ ६६ ॥

स वञ्चयन्खड्गममुष्य लीलया
कदापि मर्म स्वकमप्रदर्शयन् ।
अपक्रमाभिक्रमसंप्लुतोत्प्लुतै-
र्विचित्रमीशो व्यचरद्रणाङ्गणे ॥ ६७ ॥

अवस्थितः स्थाणुवदग्रतो रिपो-
निपातयन्निश्चलमायुधं क्षितौ ।
अपि प्रहाराञ्छतशोऽस्य निःसृता-
नवञ्चयंत्किंचिदिवाङ्गकुञ्चनैः ॥ ६८ ॥

हसन्नवज्ञामसृणैर्विलोचनै-
रवेक्षमाणस्तृणवत्तमुद्भटम् ।
किमप्यभिक्रम्य चकार हुंकृतैः
कृपाणमुष्टिं शिथिलं स वैरिणः ॥ ६९ ॥

उदस्यतीवासिमधो निपातय-
त्यधो दधातीव निहन्ति मूर्धनि ।
प्रमत्तवत्तिष्ठति नाभिगम्यते
परेण तस्यैवमवर्तताहवः ॥ ७० ॥

असिं विधून्वन्भ्रमयन्नुदञ्चय-
न्निपातयन्निश्चलमावहन्पुनः ।
करोऽस्य दुर्योधमनोभयंकरो
निमेषमप्यैक्षत नैकचेष्टितः ॥ ७१ ॥

अविक्षतः काप्यसिधेनुधारया
विभिद्य तस्योदरमाहरञ्छिरः ।
प्रकाशयन्नङ्कजयं दिशां मुखे
तिरोदधे तद्वपुरिन्दुशेखरः ॥ ७२ ॥

अहो जिगायाङ्क इति प्रशंसतां
ततो जनानामवकर्णयन्गिरः ।
विसिष्मियेऽङ्कः शिवसंनिधौ वस-
न्नबुद्धतत्सङ्गरसंकथः स्वयम् ॥ ७३ ॥

विचित्रमेतत्किल वृत्तमीशितुः
प्रवृत्तमङ्के परभक्तिशालिनि ।
इति स्तुवन्तो मधुरौकसः शिवा-
दनन्यमैक्षन्त तमस्त्रकोविदम् ॥ ७४ ॥

किमेतदङ्केन शिवे निवेदितं
किमन्ततो वेत्ति स तं व्यतिक्रमम् ।
अहो दयालुत्वमनङ्गहन्तुरि-
त्यभूच्चलानामपि निश्चलं मनः ॥ ७५ ॥

तत: स कालेन शशाङ्कशेखरः
सदारमेनं प्रमथेष्वयोजयत् ।
तरन्ति नाद्यापि तपोधना द्विजाः
क ईश्वराणामवधारयेन्मनः ॥ ७६ ॥

तदादि भूयः शिवभक्तिगौरवे
विजृम्भमाणे विषये महीभुजः ।
तथागताः केऽप्यभिचर्य पन्नगं
न्ययुञ्जतोद्दामविषाग्निभीषणम् ॥ ७७ ॥

तमद्रिकूटप्रतिमं महोरगं
समापतन्तं नृपतिर्विचारयन् ।
पुराद्विनिर्गत्य पुराहितं स्मर-
ञ्शरं शरासे समधत्त दारुणम् ॥ ७८ ॥

महेशभूषान्वययोगशङ्कितः
क्षणं विनिश्चित्य स मायिकं ततः ।
अताडयत्पन्नगपाशमाशुगैः
स चावमत्तद्व्यथया विषानलम् ॥ ७९ ॥

हालाहलेनेव पुरा विनिर्यता
विषेण तेन ज्वलताभितापिताः ।
जनाः क्षितीशेन समं समाययुः
शरण्यमीशं शरणं समाकुलाः ॥ ८० ॥

कृतस्मितो नीपवनेश्वरस्ततः
कियत्तदस्तीति गिरा प्रहर्षयन् ।
उदेत्य लिङ्गादुरगान्तिकं गतः
समन्ततः प्रैक्षत शान्तया दृशा ॥ ८१ ॥

ततः पुरैवोन्मथिते फणाधरे
धराधरत्वं प्रतिपद्य तस्थुषि ।
विषाग्नितप्तान्मनुजान्द्रुमानपि
व्यधत्त देवः करुणामृताप्लुतान् ॥ ८२ ॥

तथा गते भोगिनि गां सुदुर्जयां
तथागताः कांचिदथाभिचारिकीम् ।
अकल्पयञ्जेतुमिमां समादिश-
द्दयानिधिर्वाहवृषं वृषध्वजः ॥ ८३ ॥

स तुङ्गशृङ्गव्यतिषङ्गनिर्दल-
द्घनाघनस्रस्तघनाम्बुवृष्टिभिः ।
खुरक्षतक्षोणिरजः शमं नय-
न्महावृषः प्रास्थित तज्जिगीषया ॥ ८४ ॥

पदैः स यद्वथानतपोध्वरांहति-
प्रभेदभिन्नैर्विददार मेदिनीम् ।
रजोभिरुद्धूलितसर्वविग्रहा
बभूवुरेतत्प्रभवैर्महर्षयः ॥ ८५ ॥

वृषस्तदुद्धूय विषाणयोर्युगं
प्रसह्य तस्या हृदयं बिभेद गोः ।
जरद्गवीनां हृदयं विविच्यते
यदन्तराश्चर्यगवाक्षवर्त्मना ॥ ८६ ॥

स तां पतन्तीमवनीधरात्मना
समीक्ष्य शैलः स्वयमप्यभूद्वृषः ।
उदग्रशृङ्गः पुरमुत्तरेण यो
विराजतेऽद्यापि वृषाचलाख्यया ॥ ८७ ॥

तत: कुमारं कुलभूषणाभिधं
तपोभिरासाद्य कुलार्हविक्रमम् ।
तदर्पिताशेषधुरो धरापतिः
पदं प्रपेदे परमेन्दुशेखरम् ॥ ९८ ॥

गाम्भीर्येण निषङ्गतां विशिखतां धर्मद्रुहां निग्रहा-
दुच्छ्रायेण शरासतां कटकतामुच्चावचैर्वाञ्छुखैः ।
विश्वेषामनुरञ्जनैरनुपमैरुत्तंसतामप्यसौ
बिभ्राणः कुलभूषणः कुलपतिं देवः सिषेवे शिवम् ॥

इति षोडशः सर्गः ॥



# सप्तदशः सर्गः ॥

कुलभूषणस्तदनु भूमिपतिः
कुलदैवतस्य मधुराधिपतेः ।
चरणं सदा परिचरन्नशिष-
चतुरर्णवीवलयितामवनिम् ॥ १ ॥

अजनिष्ट सुन्दर इति प्रथितो
नृपतेरमुष्य पृतनाधिपतिः ।
अतनिष्ट भक्तिमयमष्टविधा-
मपि सुन्दरेशपदपङ्कजयोः ॥ २ ॥

अभिषेणनाय कृतसंनहने
शबरेश्वरे बलिनि चेदिपतौ ।
भटसंग्रहाय स बहु द्रविणं
प्रददौ चमूपतिवशे नृपतिः ॥ ३ ॥

स शिवे निवेद्य शबरेन्द्रजये
प्रतिभूर्भवानवनिभर्तुरिति ।
अविचिन्त्य किंचिदपि पर्यचर-
द्द्रविणैस्तु तैर्द्रविणनाथसखम् ॥ ४ ॥

अतिनूत्नमातनुत धाम विभोः
स सुधार्पणस्फुटितसंघटनैः ।
रथमूर्जितं क्षितिरथस्य हया-
न्करिणश्च काञ्चनमयानकरोत् ॥ ५ ॥

बलमानयेयमिति मन्त्रिवरा-
न्बहुधा तु सोऽतिसमधत्त गिरा ।
कुलभूषणाय परिपृष्टवते
कथयांबभूव पृतनां मिलिताम् ॥ ६ ॥

सचिवोदितश्रवणजातरुषं
नृपमिङ्गितैः समवबुध्य ततः ।
बहिरानिनाय स महीरमणं
बलदर्शनाय सह तैः पिशुनैः ॥ ७ ॥

समये शशाङ्कशकलाभरणः
सहितो गणैर्मनुजरूपधरैः ।
स्वयमाजगाम पृतनारजसा
स्थगयन्दिशश्च विदिशश्च पुरः ॥ ८ ॥

रथवाजिसिन्धुरपदातिभिदा-
प्रविभक्तमप्युपसमेत्य मिथः ।
चलितं बलं नृपतिना ददृशे
चतुरम्बुराशिसमवाय इव ॥ ९ ॥

असिचर्मचापशरकुन्तगदा-
परिघत्रिशूलनालिकादिकराम् ।
अतिभीषणाकृतिमदृष्टचरीं
परिपश्यति स्म स पदातिचमूम् ॥ १० ॥

प्रलयान्तघोरपवनाभिहत-
प्रचलद्धराधरकुलप्रतिमम् ।
प्रसमीक्ष्य तं मदगजप्रकरं
परिदुद्रुवुर्नरपतेः करिणः ॥ ११ ॥

करभोष्ट्रपुंगवकरीन्द्रधृतै-
विविधायुधोपकरणैश्च रथैः ।
विविधध्वजैर्धुरि विभोश्चलिता
रथिकाः शिलादतनयप्रमुखाः ॥ १२ ॥

कुरुविन्दकज्जलकुसुम्भनिशा-
शरकाण्डवासवशरासरुचः ।
मसृणोन्नतांसलमहाहनव-
स्तुरगाः प्रचेलुरथ तस्य पुरः ॥ १३ ॥

सुरवाहिनी लहरिशुभ्रपटी-
परिवीतमौलिरसिचर्मधरः ।
परिनर्तयंस्तुरगमिन्दुधरो
निरगादनादिरपि सादिवपुः ॥ १४ ॥

असकृद्दिरिश्चमुखमन्दुरिका-
कुतुकादिवोत्पतितुमभ्रपथे ।
त्वरमाणमागमतुरंगवरं
शमयन्निगालकरघट्टनया ॥ १५ ॥

हयमुत्पतन्तमिषुवत्प्रसभा-
दवरुद्धय सव्यमपसव्यमपि ।
भ्रमयन्नयत्नलवमूरुयुग-
द्रढिमैकदेशहृतदुर्विनयम् ॥ १६ ॥

अभिगच्छति क्षितिभृति स्वयम-
प्यभिगम्य मूर्त इव वीररसः ।
अवधूय खड्गमवरुद्धय हयं
प्रणनाम तं प्रणतमेष पुरः ॥ १७ ॥

अवितर्क्यवैभवमदृष्टचरं
तमवेक्ष्य तामपि चमूं महतीम् ।
तदुदाररूपहृतवाङ्मनसः
क्षणमास्त पाण्ड्यनृपतिः स्तिमितः ॥ १८ ॥

वचनैरमुं प्रकटितप्रणयै-
र्वसनैर्विभूषणगणैश्च नृपः ।
परितोषयन्प्रतिमुहुः प्रणम-
न्परिषस्वजे दृढमभीक्ष्णमपि ॥ १९ ॥

मशकं विजेतुमनुचिन्तयता
मदसिन्धुरोऽयमुपलब्ध इति ।
कथयन्नृपश्चरमुखादश्शृणो-
न्मृगयासु सिंहनिहतं विमतम् ॥ २० ॥

अथ पार्थिवः प्रमुदितस्तमसा-
वनुमन्यते स्म शिबिराय यदा ।
स तिरोदधे सतुरगः सबलो
गिरिशस्तदैव धुरि भूमिभुजः ॥ २१ ॥

तदवेत्य केलिषु कुतूहलिनो
मधुरेश्वरस्य महिमायमिति ।
पिशुनान्निगृह्य पृतनाधिपतिं
बहुमन्यते स्म बहुधा नृपतिः ॥ २२ ॥

निखिलं पुरा निजधनं गिरिशे
व्ययितं यथा किल चमूपतिना ।
सकलं तथा व्ययितुमेव नृप-
श्चकमे तदादि मधुराधिपतौ ॥ २३ ॥

गजवाजिगोमहिषधान्यधन-
क्षितिभृत्यमित्रसुतदारमुखम् ।
सकलं शिवाय न ममेति वद-
न्क्रतुनाराराध महताथ शिवम् ॥ २४ ॥

अवलोक्य रिक्तमथ कोशगृहं
नृपतेर्दयानिधिरनङ्गरिपुः ।
धनमक्षयं वितरति स्म तथा
स यथा न पारयति तद्व्ययितुम ॥ २५ ॥

धनमक्षयं धनपतेर्दिशतो
विगता शिवस्य न हि भिक्षुकता ।
कुलभूषणेऽस्य तु तदर्पयतः
सदनं सुवर्णमणिचित्रमभूत् ॥ २६ ॥

अथ कन्यकाः किल कुलेषु विशा-
मतिसुन्दरेण वपुषा शतशः ।
अलभन्त जन्म मधुरानगरे
समयेन शंकरकथानिरताः ॥ २७ ॥

परपुंसि दारुवनचारिणि याः
परमं बबन्धुरभिलाषमिमाः ।
मुनिसुभ्रुवो हि पतिशापवशा-
दभजन्विशां पुनरपत्यदशाम् ॥ २८ ॥

अथ तासु तत्र कलितावतरे
तरुणिम्नि वैश्यतनयासु शनैः ।
मनसि स्मरस्मरजितौ युगप-
त्सुहृदाविव प्रविशतः स्म तदा ॥ २९ ॥

अथ वैश्यवीथिषु वणिक्तरुणो
विमलाम्बरो विविधभूषणभृत् ।
अतिसुन्दरो वलयविक्रयिणा-
मवलम्ब्य रूपमचरद्गिरिशः ॥ ३० ॥

वितथेषु पुष्पविशिखेषु शिवे
वलयायुधानि बहुधा कलयन् ।
अयमालि संचरति पञ्चशरो
न मृषेति तत्र जगदुः सुदृशः ॥ ३१ ॥

वणिजस्ततो वलयविक्रयिणो
भवति स्म वैश्यसुदृशां च तदा ।
इतरेतराशयचमत्करणी
सरसा वचःप्रतिवचःसरणिः ॥ ३२ ॥

वितरन्तु पक्कमिह तालफलं
यदि वापि जम्भलफलं विपुलम् ।
वलयानिमान्दधतु वामदृशः
कनकेन किं मम गिरौ वसतः ॥ ३३ ॥

क नु काञ्चिदेशमपहाय गति-
र्मम वः कदाचिदिति मत्सविधे ।
अधरेद्युरुक्तमधुना तु कथं
वसतिं निजामभिदधासि गिरौ ॥ ३४ ॥

अतनुज्वरादभिहतोऽस्मि चिरा-
त्तृषितोऽस्मि कापि यदि बिम्बफलैः ।
तरुणी भिषज्यति ममार्तिमिमां
पथिकस्य मे भवति सा शरणम् ॥ ३५ ॥

उचितोपयोगविरहादफलं
  वितरामि तावदिह बिम्बफलम् ।
मदनाश्रयस्य परितश्चरतो
  भवतः कथं भवतु विज्वरता ॥ ३६ ॥

सुदृढास्तवैव करयोरुचिता
  इति ये त्वया सुघटिता वलयाः ।
त्वयि निर्गते सपदि तैर्गलितं
  वचनं कथं नु तव विश्वसिमः ॥ ३७ ॥

वलयान्प्रदाय करिदन्तमया-
  न्न मणिर्न काञ्चनमयाचि मया ।
अपि काञ्चिकार्थनमभूद्विफलं
  त्वयि मे प्रतिश्रुतमपीह कथम् ॥ ३८ ॥

मम देहि विद्रुममयान्वलया-
  न्मम देहि विद्रुममणिं प्रथमम् ।
मम देहि दन्तवलयान्विमलां-
  स्तव तन्वि वेद्मि न हि दन्तपदम् ॥ ३९ ॥

इति संलपन्सरसमिन्दुधरो
विचरन्गृहेषु विविधेषु विशाम् ।
करपल्लवव्यतिकरेण तदा
सफलीचकार जननं सुदृशाम् ॥ ४० ॥

अथ ता मुनीन्द्रदयिता न चिरा-
त्तनयोपलम्भमुदिताः शतशः ।
परिमृष्टशापकलुषाः प्रमथै-
र्गिरिशो निनाय कलधौतगिरिम् ॥ ४१ ॥

स कदाचिदास्त वटमूलतले
सनकादिभिः शमधनैर्नियतैः ।
अणिमादिसिद्धिकृतमद्रिसुता-
चरणार्चनोपनिषदं कथयन ॥ ४२ ॥

उपदेशमेनमतिभक्तिवशा-
दुपशृण्वतां शमवतां सविधे ।
अपि यक्षिणीरनवधानपराः
कुपितः शशाप कुसुमास्त्रहरः ॥ ४३ ॥

क्वचिदत्र पाण्ड्यविषये विपिने
विजने तले वटतरोर्महत: ।
उपलत्वमेत्य वसतेति तत:
प्रससाद ताभिरसकृत्प्रणत: ॥ ४४ ॥

स समा: सहस्रमतिलङ्घ्य तत:
परिगृह्य देशिकतनुं गिरिश: ।
अणिमादिसिद्धिमनुगृह्य पुन-
र्नयति स्म यक्षवनितास्त्रिदिवम् ॥ ४५ ॥

कुलभूषणोऽपि धरणीरमण:
शफरेक्षणासहचरार्चनया ।
अथ राजपूर्वपदमिन्द्रमसौ
लभते स्म शिक्षितनयं तनयम् ॥ ४६ ॥

अपि राजसिंह इति कश्चिदभू-
दनुजोऽस्य दुर्विषयलुप्तमति: ।
समनन्तरं पितुरयं सहजं
सुतवद्ररक्ष तमपि क्षितिप: ॥ ४७ ॥

समयेऽत्र चोलनृपतिः प्रथितः
कुलशत्रुरस्य किल पाण्ड्यविभोः ।
मधुरेशदर्शनकुतूहलिना
मनसान्वतप्यत तपांसि चरन् ॥ ४८ ॥

स्वपने कदाचिदथ चोलनृपं
प्रतिबोद्ध्य गूढमुपयातमिमम् ।
विघटय्य गोपुरकवाटयुगं
निजमानिनाय निशि धाम शिवः ॥ ४९ ॥

स निमज्ज्य हेमनलिनीसलिले
प्रणिपत्य मीननयनागिरिशौ ।
तदनुग्रहेण नगराच्च बहि-
र्निरगात्तदैव निशि चोलनृपः ॥ ५० ॥

स पुनश्च गोपुरकवाटयुगं
घटयञ्छिवो वृषभमुद्रिकया ।
परिचिह्नयन्मनसि पाण्ड्यविभो-
रतनिष्ट संशयमभेद्यतरम् ॥ ५१ ॥

स परेद्युराप्तसचिवैर्विमृश-
न्नपि किंचिदध्यवससौ न यदा ।
नृपतिस्तदा निखिलमोहहरं
शरणं ययौ शशिकलाभरणम् ॥ ५२ ॥

अपदानमेतदधिगत्य नृपः
सकलं गिरा गगनसंभवया ।
सखितामियेष गुणगृह्यतया
स तदैव चोलधरणीपतिना ॥ ५३ ॥

अथ राजसिंहनृपतिर्नृपते-
रनुजो विगृह्य कियदप्यपदे ।
उपयम्य चोलनृपतेस्तनया-
मपि तेन सख्यमकरोत्सुदृढम् ॥ ५४ ॥

अथ तौ समेत्य मधुरानगरी-
मभिजग्मतुर्बहुचमूसहितौ ।
ददृशे निदाघसमयोऽपि तदा
परिशोषयन्सलिलशब्दमपि ॥ ५५ ॥

अपि शुष्यति त्रिदिवसिन्धुजले
तृषया हतेषु तुरगेषु भृशम् ।
गतिमान्द्यतो गगनसीम्नि रवे-
र्दिवसेषु दैर्घ्यमजनिष्ट तदा ॥ ५६ ॥

तपने जगत्तपति निष्करुणं
समये समस्तमयशो निहितम् ।
सचिवः खलः शिथिलयन्प्रकृती-
र्नृपतिं किलापदि निमज्जयति ॥ ५७ ॥

विरतेषु विश्वजयिनः कुसुमे-
ष्वतनोः शिरीषमवशिष्टमिदम् ।
तदपि प्रणश्यतु किमस्य गतं
प्रभवोऽपि किं परमुखादरिणः ॥ ५८ ॥

कुचकुम्भमेव मदनः सुदृशा-
मवलम्ब्य पूर्वमजयद्भुवनम् ।
अधुनापि चेत्स कुशली तदलं
किमनेन घर्महतकेन धनुषा ॥ ५९ ॥

अविचारितारिसममित्रकथे
  समये जगत्त्रपति दुर्ललिते ।
मदनस्तदाशुगहताश्च समं
  शरणं ययुः स्तनगिरिं सुदृशाम् ॥ ६० ॥

मदने प्रवर्तयति वारयति
  श्रमवारिशीकरकिरे समये ।
अलभन्त कामिषु गतागतिका-
  मसकृच्चरा इव दृशः सुदृशाम् ॥ ६१ ॥

अनवेक्ष्य नाथमियमम्बुजिनी
  शिशिरे यदास्त विदितं किल तत् ।
परया श्रिया ज्वलति तत्र रवौ
  कथमद्य जीवनकथापि गता ॥ ६२ ॥

विकचेषु सूरकिरणोष्मभिया
  मुकुलीकृतेषु च निवाततया ।
कमलोदरेषु शयितुं भ्रमरो
  न शशाक तन्नमधुसेवनतः ॥ ६३ ॥

अपि नारिकेलसलिलेक्षुरसै-
रजहत्तृषो रविकरक्वथितैः ।
अपिबन्नहःपरिणतौ सुदृशा-
मधरं प्रियाः प्रणयशीतलितम् ॥ ६४ ॥

करिणोऽपि कर्णवलयानसकृ-
च्चलयांबभूवुरनिलाय मुधा ।
ववृते न फूत्कृतिषु वामदृशां
व्यजनेऽपि लुप्त इव गन्धवहः ॥ ६५ ॥

अनवग्रहैरपरदिक्पवनैः
समुदस्यमानमपदिश्य रजः ।
सलिलाशया मरुमरीचिषु किं
धरणी दिगन्तमगमत्तृषिता ॥ ६६ ॥

अतिचण्डपश्चिमसमीरहतै-
रभितोऽपि तिग्ममहसः किरणैः ।
अनुषञ्जिता इव वनावलयो
दवसंगता ददृशिरे शतशः ॥ ६७ ॥

सरसीषु पल्वलदशा ददृशे
भुवि पल्वलेष्वपि च शाड्वलता ।
अपि शाड्वलेषु चिरजाङ्गलता
परतो वयं न वदितुं प्रभवः ॥ ६८ ॥

पवनेन संवलित एव शिखी
परिजृम्भते न परथेत्ययशः ।
परिमार्ष्टुमेव पवने विरम-
त्यदहद्वनं वनमहो दहनः ॥ ६९ ॥

क्वथितं जलं क्षितितलं ज्वलितं
मरुतश्च मुर्मुरकिरः परितः ।
गगनं च दुर्विषहमर्ककरै-
रिति पर्यणंस्त जगदग्निमयम् ॥ ७० ॥

अपनीय कञ्चुकमहर्विगमे
मरुदाशया रहसि मुग्धवधूः ।
समवस्थिताः समुपलभ्य हठा-
त्परिरेभिरे सुकृतिनस्तरुणाः ॥ ७१ ॥

रजनीमुखाहृतमृणाललता-
वलयैः शशाङ्ककिरणस्नपितैः ।
उषसि स्वयं प्रियतमोपहृतैः
सरसीष्ववर्तयत चक्रगणः ॥ ७२ ॥

इयतापि तावदिदमापतितं
प्रलयं तरेम पयमेति दृढम् ।
अवगत्य यत्र शफरैरुषितं
लुलितं सरस्तदपदे महिषैः ॥ ७३ ॥

अवगाह्य पद्ममकरन्दझरी-
ष्वहिमद्युतावनुदिते भ्रमराः ।
अजपन्नुपांशु कृतझङ्करणा
मदनापमृत्युहरमन्त्रमिव ॥ ७४ ॥

धृतमल्लिकाकुसुमहारलता
घनसारचन्दनरसार्द्रकुचाः ।
वनिता दुकूलवसनाभरणा-
स्तरुणानुपासत दिनापगमे ॥ ७५ ॥

कटकं प्रविष्टवति चण्डकरे
कटकं तदव्यथत चोलपतेः ।
ववृधे तु पाण्ड्यनृपतेः समये
महसां निधेरिव महः परुषम् ॥ ७६ ॥

अथ सुन्दरेशमभिवन्द्य नृपः
कलयन्प्रसादबलमस्य बलम् ।
निरगाद्यथोपनतसैन्यवृतो
नगरादरातिविजयाय तदा ॥ ७७ ॥

चिरसंप्ररूढदृढमत्सरयो-
रजनिष्ट जन्यमथ तत्र तयोः ।
अपि विस्मयाय हृदि यद्द्युसदा-
मपि नारदस्य यदलंमतये ॥ ७८ ॥

असिकुन्तशूलपरशुच्छुरिका-
परिघाभिघातविगलद्रुधिरम् ।
अविचारितस्वपरसैन्यमभू-
त्प्रधनं तदस्थिरजयापजयम् ॥ ७९ ॥

समरे भुजाभुजि कचाकचि च
प्रहरद्वयं चलति तद्बलयोः ।
तदवेक्षितुं गगनमध्यतलं
रविरध्यरोहदतितुङ्गमिव ॥ ८० ॥

मधुमासपुष्पितपलाशवन-
प्रतिमं तुरंगखुरधूलिवृतम् ।
तदुदन्यया परुषयाभिहतं
बलयोर्द्वयं सममभूद्विरतम् ॥ ८१ ॥

परिपूरितां शिशिरकुम्भशतै-
र्विपुलां प्रपां क्वचन पाण्ड्यबले ।
अधिरुह्य मौलिसरिदम्बुभरै-
स्तृषितानतर्पयत भूतपतिः ॥ ८२ ॥

करुणामृतेन मधुराधिपते-
र्मधुरैश्च मौलितटिनीसलिलैः ।
परिपोषिताः सपदि पाण्ड्यभटाः
पुनराहवाय मतिमादधिरे ॥ ८३ ॥

अथ सिंहनादमुखरा युगप-
न्नृपतेर्भटाः परिनिपत्य रणे ।
सह राजसिंहधरणीपतिना
जगृहुः करे सपदि चोलनृपम् ॥ ८४ ॥

जयं समासाद्य निवर्तमानः
प्रपां पुनः काप्यनवेक्षमाणः ।
राजेन्द्रपाण्ड्यो मधुरेश्वरस्य
लीलायितं तत्कलयांबभूव ॥ ८५ ॥

सख्यं प्रदाय मधुरेश्वरभक्तियोगा-
त्सत्कृत्य चोलनृपतिं विससर्ज पाण्ड्यः ।
तं राजसिंहमपि दुर्मदमुन्मदिष्णुं
भ्रातेति जातकरुणो बिभरांबभूव ॥ ८६ ॥

अम्भोभिः केवलैरप्यवनिपतिचमूं तर्पयञ्जातु तन्नां
ख्यातिं धत्ते यदीशः कियदिव न यशो नित्यमन्नप्रदायाः ।
देव्या मीनेक्षणाया इति नगरजुषामद्भुतान्भक्तिवादा-
ञ्शृण्वन्राजेन्द्रपाण्ड्यः सकलमपि महीचक्रमेकः शशास ॥

ततो राजेशपाण्ड्योऽभूद्राजगम्भीर इत्यतः।
पुरुहूतजिदप्यासीदस्मादासीत्कुलध्वजः॥ ८८॥

सुन्दरेशप्रसादेन सुन्दरेशाङ्घ्रिशेखरः।
ततो जज्ञे यतो जज्ञे तारेन्दुविमलं यशः॥ ८९॥

इति सप्तदशः सर्गः॥



# अष्टादशः सर्गः ॥

स हयान्सहस्रमयुतं भटोत्तमा-
न्करिणः शतं दश महारथानपि ।
परिगृह्य सैन्यमुचितं व्ययं चर-
न्नवशिष्टमन्यदखिलं शिवे ददौ ॥ १ ॥

अथ धाम्नि पुष्पवननाम्नि धूर्जटे-
रविदूरवर्तिनि कदम्बकाननात् ।
अजनिष्ट कापि किल हेमनायिके-
त्यभिविश्रुता जगति रुद्रकन्यका ॥ २ ॥

शिवभक्तपूजनपरा शिवव्रता
शिवबिम्बमेकमखिलोत्सवोचितम् ।
परिकल्प्य सिकथकमयं प्रचक्रमे
परिशुद्धताम्रकणसंचयाय सा ॥ ३ ॥

अथ नाचिरादनुपलब्धसाधना
दधती तमेव सुदृढं मनोरथम् ।
मधुरेशमेव धृतसिद्धविग्रहं
मदिरेक्षणालभत भाग्यतोऽतिथिम् ॥ ४ ॥

प्रणिपत्य तं परिचरन्त्यनेकधा
रससिद्धिदर्शनपरेण तेन सा ।
अनुकम्पिता सकलमायसं गृहे
भसितेन तस्य नयति स्म हेमताम् ॥ ५ ॥

कृतविस्मयाथ गिरिशे तिरोहिते
परिकल्प्य तां प्रतिकृतिं हिरण्मयीम् ।
अवलम्ब्य गण्डतलमङ्गुलीमुखैः
परिचुम्बति स्म गणिकातिसुन्दरम् ॥ ६ ॥

अधुनापि तन्नखपदं यदीक्ष्यते
विमले कपोलफलके महेशितुः ।
श्रमवारिलेशवति तत्र संगतं
शकलं विधोरिव जटापरिच्युतम् ॥ ७ ॥

अपि यन्महाक्रतुभिराप्तदक्षिणै-
रपि वा त्रयीपरिचयैरहर्निशम् ।
अनवाप्यमस्ति पदमैन्दुशेखरं
तदवाप सा तदनुकम्पिता ततः ॥ ८ ॥

गजवाजियोधरथयूथभीषणां
परिगृह्य चोलनृपतौ पताकिनीम् ।
अभिगच्छति स्वयमनन्यसाधनः
शिवमारराध शिवपादशेखरः ॥ ९ ॥

तमुवाच वागथ नभःसमुद्भवा
न बिभीहि तस्य महती चमूरिति ।
अभिषेणय त्वमरिमल्पसैनिको
विजयस्तवैव भवितेति पार्थिवम् ॥ १० ॥

अथ पाण्ड्यमल्पबलमभ्ययाद्बली
सरितं समुद्र इव चोलपार्थिवः ।
नृपतिश्च निश्चलमतिर्व्यवस्थितः
कलयन्पुरः कनकशैलकार्मुकम ॥ ११ ॥

अथ युद्धमुद्धतमवर्धत क्षणा-
दृढरूढगूढतरवैरयोस्तयोः ।
असिपातपाटितपतन्मतङ्गज-
स्रवदस्रसिन्धुहृतसैन्धवव्रजम् ॥ १२ ॥

निशितेषु तत्र निपतत्सु सायके-
ष्वभितो भयादतिविदूरवर्तिनः ।
निहतान्हयद्विपभटान्निनीषवो
मुहुराह्वयन्यमभटाः प्रसान्त्वनैः ॥ १३ ॥

वपुरानिलं न पिशिताशनक्षमं
यदि पार्थिवं शरशतैर्विभेत्स्यते ।
इदमुत्तरेम कथमर्थकृच्छ्रमि-
त्यवलन्त दूरमभितः पिशाचिकाः ॥ १४ ॥

प्रथमं हता युधि दिवं समुद्गताः
पुनरर्धवर्त्मनि शरैर्निपातिताः ।
पुनरुद्गता द्विगुणभागभाजिनः
कतिचिद्भटा दिवि कृताः सुधाशनैः ॥ १५ ॥

अगृहीतशक्तिकतया मिथः कथा-
स्ववबद्धमौनकृतहस्तचेष्टिताः ।
अमरस्त्रियो रणहताश्च तद्भटाः
पशुवत्सुखं निखिलमप्यभुञ्जत ॥ १६ ॥

धवलातपत्रवलयाश्चकाशिरे
रदनाश्च मत्तकरिणां निपातिताः ।
यशसो दिगन्तमभिपूरयिष्यतः
प्रथमोद्गता रणतलेऽङ्कुरा इव ॥ १७ ॥

तुरगैः समं तुरगसादिनो हता
दिवमुद्ययुः समधिरुह्य तान्पुनः ।
अतिसाहसेन दिवमभ्युपेयुषा-
मपि वाह्यवाहकदशा न शाम्यति ॥ १८ ॥

अवभिद्य बिम्बमहिमद्युतेर्दिवं
प्रतिगच्छतां युधि भटाश्वदन्तिनाम् ।
गणनाममर्त्यगणका वितेनिरे
चरमाङ्गसीम्नि निभृता विवस्वतः ॥ १९ ॥

शरपञ्जरस्थगितभूनभोन्तरे
समराङ्गणे घनतमःसमावृते ।
अभिसारिकेव विजयेन्दिरा चर-
न्त्यवृणीत तं तमविशेषदर्शिनी ॥ २० ॥

बलयोर्द्वयोरपि मदोद्धटा भटा
बहवस्तथा रणमुखे निपातिताः ।
सकलं यथाजनि पुरं शतक्रतो-
र्हृतदारमन्दिरविमानभूषणम् ॥ २१ ॥

हतशिष्टमल्पमवलोकयन्बलं
प्रचचाल पाण्ड्यनृपतिर्यदा पुरः ।
तरसावपत्य हयसादिरूपतः
पुरतश्चचाल पुरशासनस्तदा ॥ २२ ॥

परुषं रुषा परिरटन्करेण च
भ्रमयन्युधि त्रिशिखमुन्मिषच्छिखम् ।
प्रचलन्पदानि कतिचित्पुराहितः
शिथिलीचकार निखिलं बलं द्विषाम् ॥ २३ ॥

अपविद्धकुन्तलमचिन्तिताटवी-
सलिलानलप्रदरगर्तकण्टकम् ।
अनवेक्षितस्वजनमानशे दिशो
बधिरान्धमूकमिव तद्बलं द्विषाम् ॥ २४ ॥

सह धावतो निजजनान्परभ्रमा-
दभिगम्य केचिदभयं ययाचिरे ।
अपरे क्षताः स्म इति मूर्छिताः स्वयं
क्षतजोक्षितान्पथि समीक्ष्य धावतः ॥ २५ ॥

अधियुद्धरङ्गमसवस्तृणीकृताः
शिवपादशेखरवरूथिनीभटैः ।
इति किं प्रतीक्ष्य रुषिताखिलं तृणं
पृतना चचर्व पथि चोलभूभृतः ॥ २६ ॥

अथ मुक्तकेशमपथेन विद्रव-
न्सरसि क्वचित्सतुरगः ससैनिकः ।
निममज्ज चोलनृपतिर्निमज्जय-
न्नखिलं कुलं स्वमयशःपयोनिधौ ॥ २७ ॥

अतुलानि हेममणिभूषणाम्बरा-
ण्यपहृत्य तस्य कटकान्महीपतिः ।
अखिलानि तान्युपददे महाशयो
हरिणाङ्कचूडचरणारविन्दयोः ॥ २८ ॥

अथ भक्तसौम्य इति कश्चिदर्चय-
न्ननिशान्नदाननियमेन शंकरम् ।
अनुवर्तयन्व्रतमृणार्णधारया-
प्यवसीदति स्म विधनः स सर्वथा ॥ २९ ॥

व्रतभङ्गखेदविवशं तमग्रतः
पतितं जिहासुमपि दुर्लभानसून् ।
प्रतिपाद्य तण्डुलनिधानमक्षयं
परिरक्षति स्म मधुरेश्वरो हरः ॥ ३० ॥

अथ कश्चिदर्थपतिरित्यभिख्यया
विदितो विशामधिपतिः पुरे वसन् ।
असुतो धनानि भगिनीसुते दिश-
न्दशमी जगाम तपसे वनाश्रमम् ॥ ३१ ॥

अखिलं धनं तदपहर्तुमिच्छवो
भगिनीसुते विनिहितं सनाभयः ।
पृथुकं यदा तमधिकं बबाधिरे
शरणं ययौ स मधुरेश्वरं तदा ॥ ३२ ॥

अथ तस्य मातुलवपुः पुरो भव-
न्नभिजित्य तान्नृपसभे विरोधिनः ।
सहसा यदा पुरहरस्तिरोदधे
सकलैस्तदा सदसि विस्मितं जनैः ॥ ३३ ॥

तनयं ततो वरगुणं तपोबला-
च्छिवभक्तमेत्य शिवपादशेखरः ।
अखिलं महीवलयमर्पयन्सुते
शफरेक्षणाचरणयोरलीयत ॥ ३४ ॥

स कदाचिदेत्य मृगयां परापत-
च्छयितं क्वचिद्द्रुमतले पथि द्विजम् ।
निहतं तुरंगखुरघट्टनैर्विद-
न्विभयांबभूव जगृहे च हत्यया ॥ ३५ ॥

वसुधेश्वरो वरगुणोऽथ दुःखितः
　सकलं निधाय सचिवेषु भूभरम् ।
जपदानहोमविधिभिर्जगत्पतिं
　सततं यजन्नपि न शान्तिमाप सः ॥ ३६ ॥

अशृणोत्स वाचमशरीरिणीं ततः
　करुणालयस्य हरिणाङ्कधारिणः ।
मधुराकृतस्य हि महत्त्वमंहसः
　सुकृतस्य वा न पथि वर्तते गिराम् ॥ ३७ ॥

मम लिङ्गमर्जुनतरोरधस्तले
　महदस्ति सह्यतनयातटे शुभे ।
तदुपासनेन तव तात दुष्कृतं
　सकलं प्रयाति विलयं क्षणादिति ॥ ३८ ॥

स तथेति कार्यमवधार्य निःसर-
　न्नपदिश्य चोलनरपालनिग्रहम् ।
शिवमर्जुनेशमभिवन्द्य तत्क्षणा-
　दभवन्निवृत्तकलुषो महीपतिः ॥ ३९ ॥

स पुनः समेत्य नगरीमकल्मषः
फणिवक्त्रमुक्त इव पार्विको विधुः ।
प्रशशास वासव इव त्रिविष्टपं
वसुधेश्वरो वरगुणः क्ष्मातलम् ॥ ४० ॥

अथ भद्र इत्यभिमतः क्ष्मापते-
रतिविश्रुतश्च भुवि गानविद्यया ।
उपवीणयन्ननिशमुत्पलप्रियं
चिरमास्त कश्चन कदम्बकानने ॥ ४१ ॥

अथ तं विजेतुमपरस्तु गायकः
प्रथयन्यशो विरुदडिण्डिमस्वनैः ।
नृपतिं ददर्श स यदा तदा शिवः
स्वयमेव भक्तमवितुं मनो दधे ॥ ४२ ॥

स निधाय मूर्ध्नि शशिखण्डमण्डने
सुमहान्तमिन्धनभरं नराकृतिः ।
दिवसावसानसमयावधि भ्रम-
न्परितश्चचार मधुरापुरे हरः ॥ ४३ ॥

इदमिन्धनं धनमिवाहृतं चिरा-
दतिशुष्कमव्रणमकण्टकं गुरु ।
श्रममस्य मूल्यमुपकल्प्य गृह्यता-
मिति घोषयन्परिचचार शंकरः ॥ ४४ ॥

उपगायतोऽस्य पथि गानवैभवा-
दुपजातपल्लवतयातिकोमलम् ।
अपि मस्तकस्थसरिदम्भसार्द्रितं
न तदिन्धनं जगृहुरस्य नागराः ॥ ४५ ॥

चरतोऽस्य तत्र नगरे ततस्तत-
श्चरणाब्जविन्यसनभावितं रजः ।
चतुराननप्रभृतिभिः समं सुरैः
प्रणिपत्य संजगृहिरे महर्षयः ॥ ४६ ॥

करयुग्मसंयमितभारमन्थरं
घटितश्रमाम्बुकणमस्य वीथिषु ।
क्रयवादनादजितकोकिलारवं
गतमागतं च न गतं ममाशयात् ॥ ४७ ॥

अथ काष्ठभारमवरोप्य दुर्भरं
स बहिर्गृहादभिनवस्य गायतः ।
उपविश्य वीतभरणश्रमः शनै-
रुपगायति स्म मधुरं यदृच्छया ॥ ४८ ॥

अथ षाडवौडवविभेदि सर्वम-
प्यवलम्ब्य रागकुलमस्तसङ्करम् ।
स जगावनुल्लिखिततानधोरणी-
मधुरं ह्रिये हृदि भिये च गायताम् ॥ ४९ ॥

अथ विस्मयादभिनवस्य गायतो
गुरुसंप्रदायमभिगम्य पृच्छतः ।
स जगाद भद्रसदने गतागतै-
रदसीयगीतिगुणरीतिमाहृताम् ॥ ५० ॥

तदुदीरितश्रवणलब्धसाध्वसे
प्रपलायिते सपदि तत्र गायके ।
उपगम्य भद्रमुचितैर्विभूषणै-
र्बहुमन्यते स्म नृपतिर्धनैरपि ॥ ५१ ॥

स ददौ समस्तमपि तन्महेश्वरे
वितताार यद्वरगुणोऽस्य पार्थिवः ।
अपि संचितं वसु दिशञ्शिवाश्रमि-
ष्वधनो बभूव बहुधार्जयन्नपि ॥ ५२ ॥

कविगायकाभिमतकल्पशाखिनः
सविधे कदाचिदथ चेरभूपतेः ।
प्रवितीर्य लेखमपि भक्तमात्मनः
प्रजिघाय भद्रममृतांशुशेखरः ॥ ५३ ॥

स्वपने पुरैव स च तत्समागमं
प्रतिबोधितः पुरहरेण पार्थिवः ।
अभिगम्य भद्रममितैर्विभूषण-
द्रविणाम्बरैः सपदि पर्यपूजयत् ॥ ५४ ॥

इति कन्दलत्यहरहर्दयारसे
शफरेक्षणासहचरस्य गायके ।
भवति स्म भक्तिरपि तस्य तावती
चरमं शरीरमधितस्थुषस्तदा ॥ ५५ ॥

उषसि प्रगे तदनु सङ्गवे ततो
दिनमध्यगे दिनमणौ निशामुखे ।
रजनीदले च नियमादसेवत
प्रमथाधिनाथमुपवीणयन्नयम् ॥ ५६ ॥

समयेषु षट्सु नियमेन यज्ञगौ
स बहिर्वृषात्स्वयमनावृते वसन् ।
द्रढिमानमस्य नियमे परीक्षितुं
जलदानचोदयत वृष्टये हरः ॥ ५७ ॥

स्तनितारवैर्बधिरतामगुर्दिश-
स्ताटितां त्विषा तनुभृतां हृता दृशः ।
अपतन्निक्षतावशनयः पदे पदे
तिमिरं निरन्तरमरुद्ध रोदसी ॥ ५८ ॥

जगदास्त बद्धमिव जातसाध्वसं
समये यदा स तु तदैव गायकः ।
अवगाह्य हेमकमलाकरे शनै-
रभिगम्य संनिधिमगायदैश्वरम् ॥ ५९ ॥

अथ मेघरश्मिमहिरश्मिमुख्यत-
न्मदगानसंवलितरागवैभवात् ।
द्रवतां प्रपन्नमिव भूनभोऽन्तरं
ददृशे तदा जलधरैर्निशात्यये ॥ ६० ॥

करकोपलैर्विघटिता विपश्चिका
करजा न तस्य वशवर्तिनोऽभवन् ।
अपि कम्पमानवपुरप्रकम्पिनी-
मवलम्ब्य भक्तिमयमुज्जगौ पुनः ॥ ६१ ॥

घनकर्दमद्रवनिमग्नमग्रत-
श्चरणद्वयं चलयितुं च नाशकत् ।
स यदा तदास्य विपुलं समुन्नतं
स्वयमुद्बभूव मणिचित्रमासनम् ॥ ६२ ॥

स निषद्य तत्र शिवसक्तया दृशा
निरवर्तयन्नियममत्वरो यदा ।
विरतं घनैर्विमलमम्बरं बभौ
विललास दिक्षु च तदैव कौमुदी ॥ ६३ ॥

फलकं तदद्भुतमवेक्ष्य पार्थिवः
प्रणिपत्य भद्रमसकृत्प्रशस्य च ।
शिवलिङ्गतोऽपि शिवयोगिषु स्थिरां
शिवभावनामकृत तत्प्रभृत्ययम् ॥ ६४ ॥

अथ राजराज इति दिक्षु विश्रुतं
तनयं बहुश्रुतमसाववविन्दत ।
तपसा प्रसाद्य तरुणेन्दुशेखरं
मलयध्वजान्वयमहानिधिं नृपः ॥ ६५ ॥

अवरोप्य भारमखिलं भुवः सुते
लघुरुत्पतन्वरगुणः शिवान्तिकम् ।
अवनीभृतः पुनरधात्फणाधरा-
नियमस्य भूभरणवासनेदृशी ॥ ६६ ॥

उदितोदितं विविधया सपर्यया
भजतां स्वमेव भुवि पाण्ड्यभूभुजाम् ।
अपवर्गमेकविधमर्पयन्नयं
मधुरेश्वरोऽपि महतीं ह्रियं दधे ॥ ६७ ॥

अथ राजराज इति लब्धमाख्यया
पुरभित्सखत्वमतिशय्य वर्तितुम् ।
पितरौ गुरुं सुहृदमात्मनः प्रभुं
कुलदैवतं च कुरुते स्म तं नृपः ॥ ६८ ॥

निममज्ज तस्य हृदयं निसर्गतः
शफरेक्षणासहचराङ्घ्रिपद्मयोः ।
कुलशेखरान्वयभुवां शिवव्रते
कुत एष कारणगवेषणश्रमः ॥ ६९ ॥

अथ भद्रनामनि चिराय गायके
शिवलोकमेयुषि तदीयगेहिनी ।
चतुरा ततोऽपि किल गानविद्यया
शिवमारराध समयेषु षट्स्वपि ॥ ७० ॥

अवरोधगेहमधिजग्मुषी विभो-
रवनीपतेर्दयितया कयाचन ।
कलहायते स्म निजगानविद्यया
दृढया महेशदयया च जातु सा ॥ ७१ ॥

तदुपक्रमं धरणिवल्लभोऽपि ता-
मवमन्तुमाहितकुतूहलश्चिरात् ।
स्वयमानिनाय जलराशिमध्यतः
सुदृशं स कांचिदथ गानकोविदाम् ॥ ७२ ॥

जगतुस्ततः सदसि ते महीपते-
रधिकेत्यगृह्यत तु तत्र नूतना ।
मनसाधिगम्य मधुरेश्वरं शुचा
भणति स्म भद्रगृहिणी पुनर्नृपम् ॥ ७३ ॥

सदसि स्थिता मयि चिरादमर्षिणो
यदि किंचिदाहुरिह किं ततः क्षतम् ।
अभिगम्य संनिधिमनङ्गशासितुः
कथयन्त्वमी तरतमत्वमावयोः ॥ ७४ ॥

विजयेत या भवतु सात्र भट्टिनी
विजिता तु या भवतु सात्र किङ्करा ।
इति सा यदाह तदनिच्छतोऽप्यभू-
दभिनन्दनीयमवनीभुजस्तदा ॥ ७५ ॥

अथ ते समेत्य सविधं महेशितुः
सह पार्थिवेन सदसि स्थितैरपि ।
जगतुर्गिरा मधुरयादितस्ततः
परिवादिनीमुरलिकाविपञ्चिभिः ॥ ७६ ॥

अधिका तु यद्यपि नवैव तत्त्वत-
स्तदपि प्रपन्नजनपक्षपातिनः ।
मधुरेश्वरस्य किल माययावृता
बहुधा समस्तुवत भद्रगेहिनीम् ॥ ७७ ॥

जयभङ्गयोर्विदितयोर्विपर्यया-
दपि तत्र नीपवनभर्तुराज्ञया ।
विजिता नवैव त्रिजितं तु भद्रये-
त्यगदीदभीक्ष्णमवशो महीपतिः ॥ ७८ ॥

अवलम्ब्य दास्यमथ सिंहलागता
सदसि स्वयं परिचचार भद्रिकाम् ।
स च पार्थिवः कनकभूषणाम्बरै-
र्विविधैरपूजयत विस्मयेन ताम् ॥ ७९ ॥

इति राजराजधरणीपतेः क्षितिं
परिरक्षतः प्रणिहितेन चेतसा ।
विनयो विवेकत इवातिविश्रुत-
स्तनयोऽभवत्सुगुण इत्यभिख्यया ॥ ८० ॥

तारुण्य एव विनयावनतं कुमारं
तं राजराजनृपतिः सकलागमज्ञम् ।
पश्यन्नखण्डितपराक्रममभ्यषिञ्च-
त्संप्रार्थितः प्रकृतिभिः किल यौवराज्ये ॥ ८१ ॥

इति अष्टादशः सर्गः ॥



# एकोनविंशः सर्गः ॥

———*———

तनूभवे वहति ततो वसुंधरां
  चिरादसौ नृपतिरुपेत्य विश्रमम् ।
वनेचरैः सह मृगयाकुतूहली
  वनंवनं व्यचरदधिज्यकार्मुकः ॥ १ ॥

परिभ्रमच्छ्वगणविकृष्टशृङ्खला-
  खलंखलध्वनिजनितप्रबोधनाः ।
ततस्ततस्तरुतलकुञ्जपुञ्जतो
  विनिर्ययुर्विवृतमुखा मृगादनाः ॥ २ ॥

पुनः पुनः परिपततः शुनः क्रुधा
  जिघृक्षवः खरनखरास्तरक्षवः ।
प्रचक्रमुः किमपि यदा तदा शरै-
  र्निरन्तरानकृततरामिमान्नृपः ॥ ३ ॥

स्तनग्रहग्रहिलतया निरुन्धतः
स्तनंधयान्सपदि विलङ्घ्य संप्लुता ।
मृगी मृगं क्षितिपतिपाणिगोचरा-
दपालयत्स्वयमभिपेतुषी पुरः ॥ ४ ॥

स्वसायकादपि चललक्ष्यपातिनः
स्वयं पुरः परिचलता महीभृता ।
अरुध्यत प्रथममविध्यत त्वथ
त्वरोच्चलत्तुरगखुरक्षता मृगी ॥ ५ ॥

सटासु तरुच्छबरभटावलम्बितः
प्रकम्पितुं किमपि न चक्षमे स्वतः ।
अवैक्षत भ्रुकुटिविटङ्कभीमया
दृशा पुनस्तदपि मृगान्मृगाधिपः ॥ ६ ॥

वृथा नयन्विपिनचराञ्शराहता-
न्विषादमावहत यमन्तरन्तकः ।
स तस्य तं महिषगणान्निपातय-
न्नपाहरद्वनभुवि वाहनार्पणात् ॥ ७ ॥

गणंगणं चमरवराहगण्डका-
न्वृकानपि क्षपयति तत्र पार्थिवे ।
किटिर्झटित्युपनिपपात कश्चन
क्रुधा ज्वलन्नचलगुहागृहात्ततः ॥ ८ ॥

स दंष्ट्रया कुलिशनिशातधारया
परिक्षिपञ्शबरभटानितस्ततः ।
गणं शुनामविगणयन्पदे पदे
धरापतेस्तुरगसमीपमापतत् ॥ ९ ॥

अवस्थितं धुरि तमवेक्ष्य पार्थिवः
स संदधे धनुषि न यावदाशुगम् ।
स तावदुच्चलितविषाणकोणतो
व्यदारयच्चरणतले तुरंगमम् ॥ १० ॥

अवाप्लुतः सपदि तुरंगमात्ततः
पतिः क्षितेे रथमधिरुह्य तं पुरः ।
अवाकिरज्ज्वलितमुखैः शिलीमुखै-
र्धराधरं जलद इवाम्बुवृष्टिभिः ॥ ११ ॥

स तद्धनुर्वलयविनिःसृतैः शरैः
समाचितः शललगणैरिवाभितः ।
अचूर्णयन्मुखमसकृद्विघूर्णय-
न्ससारथिं सतुरगमस्य तं रथम् ॥ १२ ॥

ततः प्लुतः सपदि रथान्महारथ-
स्तमुद्धतं गिरिमिव जङ्गमं किरिम् ।
अनुद्रुतं प्रियतमया नृपो रया-
दपातयत्स भुवि कृपाणपाटितम् ॥ १३ ॥

ततः प्रभृत्यजनि वराहशैल इ-
त्यभिख्यया धरणिधरः स विश्रुतः ।
उपत्यकामुपरुरुधे स यस्य तां
पतन्किटिः पृथुरिव पादपर्वतः ॥ १४ ॥

गते पुरं धरणिपतौ सविस्मये
क्षुधार्दितास्तदनु वराहपोतकाः ।
प्रसूस्तनप्रणयकृतातिकूजिता
दशापतन्द्विसमधिकास्तदावशाः ॥ १५ ॥

तपस्विनामवनकृते तपस्यतो
गिरेस्तटे कृतरतिरत्र शंकरः ।
कृपालयः किटिपृथुकानपालय-
त्स तत्प्रसूतनुरमितैः स्तनामृतैः ॥ १६ ॥

पुरा युगे वृषलकुमारका हि ते
तदाश्रिताः शमधनशापतो वपुः ।
समुद्धृताः पुरमथनस्तनामृतैः
क्षणाद्दधुः किटिवदना मनुष्यताम् ॥ १७ ॥

कलासु ते दधुरखिलासु कौशलं
विशिष्य च क्षितिपतितन्त्रवैदुषीम् ।
न सूकरः शिवचरणे कृताशयः
स सूकरः पुरभिदि यः पराङ्मुखः ॥ १८ ॥

वराहताभरणविलासवासना-
वशादिव श्रुतिशतमौलिलालितम् ।
विमार्गितुं चरणयुगं पुरद्विषः
कुतूहलं सततममी वितेनिरे ॥ १९ ॥

अनुज्ञया तदनु कदापि धूर्जटे-
रवस्थितानचलगुहासु तान्नृपः ।
समानयन्सचिवपदे न्यवेशय-
द्वचस्विनो नरपतितन्त्रकोविदान् ॥ २० ॥

सभाजिता नृपतिवरेण सर्वथा
चिरायुषो द्विसमधिका दशापि ते ।
शिवाश्रमव्यतिकरधूतकल्मषाः
शिवं ययुः प्रणतशिवंकरं ततः ॥ २१ ॥

ततो गते पितरि पदं महेशितु-
स्तदात्मजः सुगुणनृपालशेखरः ।
अपालयच्चिरमवनीं ससागरा-
मचञ्चलामकृत च भक्तिमीश्वरे ॥ २२ ॥

बहिर्भ्रमन्क्षुदुपशमाय सर्वदा
बलीयसा करटकुलेन ताडितः ।
अचञ्चलं चरणयुगं शिवस्य को-
ऽप्यकिंचनः शरणयति स्म खञ्जनः ॥ २३ ॥

विहङ्गमः करटभिया शिवालये
निलीय स क्वचन विटङ्कसीमनि ।
सकृत्पतन्कनकसरोजिनीपय-
स्युपोषितः कतिचिदुवास वासरान् ॥ २४ ॥

जुहाव किं किमयमयष्ट किं ददौ
जजाप किं मलिनतनुर्विहङ्गमः ।
तपस्तदप्यजनि तदस्य चेष्टितं
परं तपः प्रपदनतः किमन्ततः ॥ २५ ॥

स मृत्युभीशमनमनूपदेशतो
बलीयसामपि बलिनं चकार तम् ।
बलान्यमी किल बलवत्सु विश्रुताः
प्रसादशीकरपरमाणवोऽस्य ये ॥ २६ ॥

स सर्वमध्यकुरुत पक्षिमण्डलं
परिग्रहात्प्रमथपतेर्विहङ्गमः ।
तदादि खल्विदमधुनापि लक्ष्यते
तदन्वये विहगकुलाधिकं बलम् ॥ २७ ॥

ततस्ततः सरसि निरीक्ष्य यादसां
परस्परप्रतिहतिपातकं बकः ।
निवृत्तजात्युचितविचेष्टितः स को-
ऽप्यगाहत प्रियकवनं कदाचन ॥ २८ ॥

विगाहते कनकसरोजिनीजले
विलोकते न तु शफरान्दृशापि सः ।
बिभर्ति तु स्वकमुदरं बिसाङ्कुरैः
प्रदक्षिणं भ्रमति सदा च शूलिनः ॥ २९ ॥

इति व्रतं दृढतरमेष धारय-
न्नुपास्त तं त्रिपुरहरं यदा चिरम् ।
तदा स्वयं तरुणशशाङ्कमौलिना
सरः कृतं विरतसरोजसंकथम् ॥ ३० ॥

स वल्गतो नवनवनीतकोमला-
न्समीपतः शफरशिशून्विलोकयन् ।
क्षुधा किल क्षुभितमना मनागिव
प्रचक्रमे पिशितपरिग्रहक्रमे ॥ ३१ ॥

समुत्प्लुतं वदनपुटे स्वयं ततः
शरारिरादित शफराभकं यदा ।
तदा झटित्यबबुधे व्रतक्षतिं
विवेकिषु प्रभवति किं चिरं तमः ॥ ३२ ॥

परित्यजन्नपि पललं झटित्ययं
प्रवर्तनात्क्षणमपथे कृतव्यथः ।
असूनपि व्ययितुमियेष दुस्त्यजा-
नहो सतां प्रकृतिरपत्रपिष्णुता ॥ ३३ ॥

स रक्षितुं बकमकरोद्यथापुरं
सरस्तदुल्लसितमृणालपल्लवम् ।
तदादि चाकृत तपनीयपद्मिनीं
विवर्जितां कियदपि यादसां गणैः ॥ ३४ ॥

स खञ्जनः स च बकशावकः प्रभो-
रनुग्रहात्परममवापतुः पदम् ।
द्विजे द्विजो यदि दयते क्षमं हि त-
द्विजो ह्ययं विबुधगणेषु गीयते ॥ ३५ ॥

दिवं गते सुगुणनृपे दयानिधा-
वुपर्युपर्युपचितसद्गुणोत्कराः ।
तदन्वये धरणिभुजो महारथाः
परःशता धरणिमिमामपालयन् ॥ ३६ ॥

युगे युगे कुलमुदितोदितं हि त-
त्प्रवर्तितं प्रथममनङ्गवैरिणा ।
प्रियंकरं प्रियकवनीपतेरभू-
दभग्नमा दिवसपरिक्षयं विधेः ॥ ३७ ॥

उपस्थिते युगविगमे पृथग्विधाः
समुद्गता दिशि दिशि धूमकेतवः ।
अरुन्द्ध च द्युमणिमहर्मुखे सदा
कबन्धवत्किमपि निरन्तरं तमः ॥ ३८ ॥

समन्ततोऽजनि शतवार्षिकः क्षिता-
ववग्रहः स्वयमनवग्रहस्ततः ।
चतुर्विधं जनुरपि भूतसंसदां
विलुप्यते जगति निरन्वयं यथा ॥ ३९ ॥

विवस्वतो विदधति सप्त रश्मयो
जगत्सु ये जलतुहिनाभिवर्षणम् ।
समेऽपि ते तपनतया पृथक्पृथ-
क्प्रतापने प्रववृतिरे समन्ततः ॥ ४० ॥

द्रवीकृतैः प्रथममथोपशोषितैः
स्थलीकृतैर्हिमशिखरैः समन्ततः ।
हिमालयो मृदुपलमात्रशेषितो
विदिद्युते भुवि किल वेत्रदण्डवत् ॥ ४१ ॥

प्रतापिताः प्रथममबिन्धनाग्निना
विशोषितास्तदनु करैर्विवस्वताम् ।
उपर्यधः क्वथितजलौघपाचितै-
स्तिमिङ्गिलैर्जलनिधयः कषायिताः ॥ ४२ ॥

विशोषिताम्भसि विधुमण्डले तदा
विसृत्वरा अपि किरणा विवस्वतः ।
खरातपा निशि परिणम्य चन्द्रिका-
प्रवर्तनप्रतिहतशक्तयोऽदहन् ॥ ४३ ॥

पराकृतद्रुमतृणगुल्मसङ्कथे
पयोधरस्मृतिविधुरे युगात्यये ।
अपि त्रिवृत्करणपथोपपादितं
पयः क्षितावजनि कथावशेषितम् ॥ ४४ ॥

फणीशितुर्वदनसहस्रनिःसृता
विषानलोद्गमनविशेषभीषणाः ।
समीरणाः सरभसताडितस्खल-
त्परस्परा ववुरपरस्परास्ततः ॥ ४५ ॥

विषानलव्यतिकरशोषितान्तर-
द्रवत्स्फुटद्दृढतरसन्धिबन्धनाः ।
शिलोच्चया अपि हि रजश्छटात्मना
दिशंदिशं पवनवशेन निन्यिरे ॥ ४६ ॥

प्रदीपिका इव पवनेन ताडिताः
प्रतिक्षणावसितपुनःसमुद्गताः ।
प्रजज्वलुः कथमपि चण्डरश्मयः
पदे पदे स्खलितरथा वियत्पथे ॥ ४७ ॥

पयः किल प्रतिहतकल्मषं सुधे-
त्युदाहरन्त्युदकरहस्यकोविदाः ।
पयःकथामपि पवनेन लुम्पता
सुधान्धसोऽप्यजहुरसून्गतान्धसः ॥ ४८ ॥

प्रसर्पता धरणितलाद्रसातलं
महोष्मणा युगविगमाहिमत्विषाम् ।
प्रतापिताः पुनरशनातिमात्रया-
प्यसूनहो जहुरहयो महानिलैः ॥ ४९ ॥

अधस्पदे कमठवराहभोगिना-
मवस्थितस्तदनु ललाटलोचनः ।
किमेतदित्युपरि दृशं द्वयाधिका-
मवाकिरद्दरदलितामवज्ञया ॥ ५० ॥

ततोऽग्निना कमलभवाण्डमूलभू-
निविष्टधूर्जटिनिटिलाक्षिजन्मना ।
चटच्चटच्चटदिति भूर्भुवःस्वरि-
त्यदह्यत त्रिजगदपि प्रसह्य तत् ॥ ५१ ॥

उदन्वतामुदरतलेषु शोषिता-
स्तदीरिता लवणमया महाद्रयः ।
समन्ततः सदसि विधातुरुद्ययु-
र्महोपला इव युधि यन्त्रनिःसृताः ॥ ५२ ॥

नभःस्वतामजनि विवस्वतामपि
क्षणादहो भसितदशा तदर्चिषा ।
बलीयसामपि बलिभिर्ध्रुवः क्षयः
परं त्वसौ भवति कियद्विलम्बितः ॥ ५३ ॥

तदर्चिषा गिरिशिखरस्फुलिङ्गया
जना महःप्रभृतिषु जातसंज्वराः ।
चिरायुषः सनकसनन्दनादयः
प्रदुद्रुवुः पदमकुतोभयं विधेः ॥ ५४ ॥

अवस्थिताः प्रियकवने युगात्यये-
ऽप्यविक्रिये मदनाजितः प्रभावतः ।
विशङ्कटे कनकसरोजिनीतटे
विशृङ्खलाः प्रमथगणा विजह्रिरे ॥ ५५ ॥

कपर्दिनस्तदनु कपर्दमण्डला-
त्समुद्गता नभसि घना घनाघनाः ।
जजृम्भिरे जगदखिलं हविर्भुजा
परिश्रितं प्रशमयितुं समन्ततः ॥ ५६ ॥

कणानपां करिकलभानिव च्युता-
न्पटत्पटद्ध्वनिमुखरान्पयोमुचाम् ।
प्रसारयन्निव रसनां शिखाच्छला-
त्पपौ शनैः सिमिसिमिति क्षयानलः ॥ ५७ ॥

पयःकणप्रशमितकल्पपावक-
प्रसृत्वरप्रतिनवधूममण्डलैः ।
समन्ततः पुनरपि सान्द्रतां गता
वलाहका ववृषुरपो निरन्तरम् ॥ ५८ ॥

ततस्ततो जलदकुले तडिद्गणा-
श्चकाशिरे चपलमरीचिवीचयः ।
विहाय भूतलमिव तद्दिधक्षया
विनिःसृताः प्रलयहुताशनार्चिषः ॥ ५९ ॥

ततोऽयुतायुतयुगयोजनोन्नता-
स्तदर्चिषः सलिलनिपातकुण्ठिताः ।
ह्रसीयसीमुपगमिता दशां तदा
निरीक्षिताः प्रियंकवनाश्रितैर्गणैः ॥ ६० ॥

परस्परं प्रलयहुताशमेघयो-
र्भयानके प्रचलति साम्परायिके ।
समागता भुवि समये हविर्भुजा
सनाभयः किमशनयः पयोमुचः ॥ ६१ ॥

उभावपि प्रलयदशानिरङ्कुशा-
वुभावपि त्रिपुरहरस्य गात्रजौ ।
तथापि तु व्यजयत वारिदोऽनलं
जयः कथं जगदुपतापिनो भवेत् ॥ ६२ ॥

भयानकैरशनिनिपातनिस्वनैः
प्रतिक्षणक्षुभितहृदः पयोमुचाम् ।
अपि क्षपामनुभवतः पदे निजे
प्रजागरः परिणमति स्म वेधसः ॥ ६३ ॥

अचन्द्रमस्तपनमपेततारकं
प्रशान्तपावकमवसन्नमारुतम् ।
अकालदिग्भुवनमसच्छुभाशुभं
तमोमयं पयसि ममज्ज तज्जगत् ॥ ६४ ॥

यदण्डतो बहिरबहिश्च यज्जलं
तदेकतां गतमिव सर्वतस्तदा ।
अगाधमप्रचलमपारमस्वनं
प्रवृद्धमाध्रुवपदमारसातलम् ॥ ६५ ॥

जडाजडे जगति गते रसातल-
क्षमानभःसुरनरतिर्यगात्मनि ।
जलान्तरे वटदलतल्पमाश्रितो
जगन्निधिर्व्यहरत कोऽपि बालकः ॥ ६६ ॥

समन्ततो जगति समावृतेऽम्भसा-
प्यमज्जति प्रियकवने निजाज्ञया ।
स बुद्बुदोदर इव सार्धमम्बया
समं गणैरपि विजहार शंकरः ॥ ६७ ॥

*S. 26-a.

चतुर्मुखे स्वपति विलुप्तसंकथे
चराचरे विरमति कालकल्पने ।
अनुश्रवैः परमधिगम्य तुष्टुवु-
र्महर्षयः कतिचन तं महीं गतम् ॥ ६८ ॥

जलप्लवैर्बहिरबहिश्च धूर्जटे-
र्जटाटवीहिमकरचन्द्रिकाङ्कुरैः ।
जडीकृते सति मधुरेश्वरालये
जगुर्गणा जहसुरनर्तिषुः सुखम् ॥ ६९ ॥

परिक्षये प्रलयनिशस्ततश्चिरा-
त्पयोजभूः सलिलशयस्य शार्ङ्गिणः ।
निदेशतो निखिलमिदं जगत्त्रयं
यथापुरं पुनरसृजत्प्रयत्नतः ॥ ७० ॥

प्रकल्पयन्प्रथममहर्निशाकरौ
प्रणाशयन्कबलितविष्टपं तमः ।
विशोषयन्सलिलमशेषमुत्थितं
विनिर्ममे विधिरमरालयं पुरः ॥ ७१ ॥

ततः क्षितौ कथमपि धाम शांकरं
तदेकमक्षतमभिजानतामुना ।
सरिद्गिरिस्थलसरिदीश्वरादिकं
सुमेधसा निखिलमकल्पि वेधसा ॥ ७२ ॥

ततः सृजन्स विबुधमर्त्यभोगिनो
निवेशयन्निजनिजधामसु स्थिरम् ।
प्रवर्तयन्सुपरिचितेषु कर्मसु
व्यधत्त तच्छयितमिवोत्थितं जगत् ॥ ७३ ॥

ततश्चिरादजनि तु वंशशेखरो
महीपतिर्द्रमिडकुलेषु कश्चन ।
प्रभुत्वमावहत स पाण्ड्यमाण्डले
महेश्वरार्पितहृदयो महाशयः ॥ ७४ ॥

स सुन्दरेश्वरसदनैकशोभिणीं
भजन्पुरीं भुवि मधुरेति विश्रुताम् ।
निवेशयन्कचिदपि काश्चन प्रजाः
कचित्स्वयं न्यविशत कल्पितालयः ॥ ७५ ॥

दिनेदिने मदनजितः सपर्यया
समृद्धसा स धरणिवल्लभश्रिया ।
यथापुरं पुरमचिकीर्षदुच्छ्रितैः
समन्ततो नृपगृहसालगोपुरैः ॥ ७६ ॥

स वेदितुं पुरपरिमाणमुत्सुको
जडे जगत्यविदिततत्पुरस्थितौ ।
दृढव्रतो द्रमिडकुलाब्धिचन्द्रमाः
समाहितः शरणयति स्म शंकरम् ॥ ७७ ॥

कृपानिधिस्तदनु शशाङ्कशेखरः
कृतादरः क्षितिभृति वंशशेखरे ।
प्रदर्शय स्थलपरिमाणमित्यशा-
द्विभूषणं भुजगवरं विनिक्षिपन् ॥ ७८ ॥

स पुष्पकाननभुवि वालमर्पय-
न्प्रदक्षिणं परिचालितः फणीश्वरः ।
शिरस्पदं पुनरपि तत्र योजय-
न्नदर्शयत्पुरपरिमाणमद्भुतम् ॥ ७९ ॥

हरित्स्वसौ चतसृषु पुष्पकाननं
गुहाचलं भुजगगिरिं वृषाचलम् ।
अनुक्रमादहितिलकः प्रदर्शय-
न्द्वियोजनं पुरमवदत्समन्ततः ॥ ८० ॥

तिरोहिते पुरहरभूषणोरगे
तदाकृतिं वरणमयं प्रकल्पयन् ।
विशङ्कटैर्विपणिपथैः शिरोगृहै-
रलंकृतं पुरमकरोद्यथापुरम् ॥ ८१ ॥

हालाहलास्यपरिवेष्टनलब्धसीमं
हालास्यमित्यभिधया नगरं तदासीत् ।
भोगाभिवेष्टिततयापि च भोगभूमिः
कैवल्यभूरपि बभूव महीविभागे ॥ ८२ ॥

आसादयन्नश्वपतिं सहाय-
मथैकदा विक्रमचोलदेवः ।
विचार्य विस्रब्धममुं नृपाल-
मायोधनायोपजगाम सैन्यैः ॥ ८३ ॥

अतर्कितासन्नमरातिसैन्य-
माकर्णयन्पाण्ड्यनृपो विशङ्कः ।
कृताभ्यनुज्ञो मधुरेश्वरेण
जयं करस्थं कलयन्प्रतस्थे ॥ ८४ ॥

धनुर्धरेष्वेकतमो भवन्हरः
शितैः शरौघैः शिवनामलाञ्छितैः ।
अवाकिरत्सैन्यमदृश्यपातिभि-
र्विशृङ्खलं विक्रमचोलभूपतेः ॥ ८५ ॥

अनुग्रहं स तमनवग्रहं विभो-
र्विचिन्तयन्क्षितिभृति वंशशेखरे ।
परित्यजन्गजतुरगान्पलायितो
विना रणं कियदपि चोलभूपतिः ॥ ८६ ॥

पराक्रमेणाप्रतिमेन पार्थिवा-
न्गिरा सुधासारकिरा कवीनपि ।
जयन्नयं सप्तसमुद्रमुद्रितां
बभार पृथ्वीं मधुरेश्वरार्पिताम् ॥ ८७ ॥

इति एकोनविंशः सर्गः ॥

# त्रिंशः सर्गः ॥

---

कपिलकीरमुखाः कवयस्ततः
कतिचिदासत ताम्रनदीतटे ।
द्रुहिणशापवशाज्जननी गिरा-
मवततार पुरा हि यदात्मना ॥ १ ॥

अथ चतुर्गुणिता व्यधिका दश
त्रिदशदेशिकधिक्करणक्षमाः ।
प्रति ययुर्मधुरामभिवन्दितुं
प्रमथनाथममी कविपुङ्गवाः ॥ २ ॥

कविशरीरभृता कवयस्तु ते
समभिगम्य हरेण पुरस्कृताः ।
समवगाह्य सुवर्णसरोजिनीं
ददृशुरद्रिसुतादयितं महः ॥ ३ ॥

दृढविनीतधियः सुधियस्तु ते
द्रमिडसूत्ररहस्यविवेचने ।
मृदुसुगन्धिवचःकुसुमस्रजा
विविधया मधुरेशमपूजयन् ॥ ४ ॥

अकवयः कतिचिद्विबुधाधमाः
कुकवयश्च परे कृतसंविदः ।
कविभिरप्रतिमैर्भुवनेषु तैः
कलहमादधिरेऽथ वितण्डया ॥ ५ ॥

शब्दार्थौ दोषनिर्मुक्तौ सालंकारौ गुणोत्तरौ ।
काव्यमातिष्ठमानेभ्यः कविभ्योऽयं कृतोऽञ्जलिः ॥ ६ ॥

आद्यं हि शब्ददोषाणामसाधुत्वं मतं च वः ।
स्वरमश्रद्दधानानां स्वरूपे केव साधुता ॥ ७ ॥

काव्यार्थादपि किं दुष्टं कामिदुश्चरितोत्तरात् ।
अत एव हि काव्यानामालापः सद्भिरुज्झितः ॥ ८ ॥

अथान्य एव कल्प्यन्ते गुणदोषा निजेच्छया ।
काकदन्ताः परीक्ष्यन्तां गृह्यन्तां ग्राम्यसूक्तयः ॥ ९ ॥

तत्र तत्र पुराणेषु तन्त्रेषु च यदि स्फुटम ।
काव्यालापानुवादोऽस्ति का जिगीषा ततोऽपि वः ॥

सर्वा वाचो वदन्तीति सप्ततन्तौ महाव्रते ।
ग्राम्योक्तयोऽपि किं शास्त्रे ऋत्वङ्गत्वेन नोदिताः ॥११॥

अयोग्यानां हि काव्यानामग्निसेकादिवाक्यवत् ।
मूकतैव हि दुर्भेदा मुह्यन्त्येषु कथं जनाः ॥ १२ ॥

कथंचिद्यदि सार्थक्यं कथंचित्तैव दूषणम ।
सफलः क्लेश इति च संप्रदायागतो भ्रमः ॥ १३ ॥

अक्लेशेन फले लभ्ये न क्लेशो युक्तिमर्हति ।
यस्मै फलाय सा गौणी तदेव स्फुटमीर्यताम् ॥ १४ ॥

अर्थानपि व्याप्नुवती हतसर्वनियन्त्रणा ।
व्यञ्जना शब्दवृत्तिश्चेद्वेश्या पत्नी न किं भवेत् ॥ १५ ॥

धूमेन ध्वन्यतां वह्निश्चक्षुषा ध्वन्यतां घटः ।
अर्थश्चेद्ध्वनयेदर्थं का प्रमाणव्यवस्थितिः ॥ १६ ॥

दुःखदोऽपि तु काव्योक्तः सुखायार्थो भवेद्यदि ।
सुखं भवन्तः शृण्वन्तु स्वनिन्दां कविभिः कृताम् ॥

अहो भावव्यक्तेः परिणतिरहो गूढरस इ-
त्यलीकव्यामीलन्नयनविगलद्बाष्पसलिलैः ।
उदञ्चद्रोमाञ्चैरुदरलुलितामैरिव मुहुः
कथं व्याप्ता भूमिः कविभिरपटुज्ञानपशुभिः ॥१८॥

इति निगदितमेवाभीक्ष्णमावर्तयद्भिः
प्रतिकथकवचांसि क्वाप्यनाकर्णयद्भिः ।
अपथचिरविनीतैर्बालिशैरात्तगन्धाः
शरणमभिसमीयुश्चन्द्रचूडं कवीन्द्राः ॥ १९ ॥

नान्धाश्चक्षुःसमेता न च खलु बधिरा आक्षिपन्तः परोक्ती-
र्नाप्येते नाथ मूका विफलमविरलं यत्तदुच्चैः स्वनन्तः ।
तत्तत्सैद्धान्तिकोक्तीरभिदधत इव क्वाप्यनाघ्राततत्त्वा
दृश्यन्ते केचिदेते शिव शिव कुधियामेष सर्गोऽद्भुतस्ते ॥

---

काव्यागमज्ञाः सुखमाक्षिपन्तु
का तत्र चिन्ता भवतः प्रसादात् ।

अहो वयं प्रव्यथिता अमीभिः
काव्याध्वदुष्टश्वभिरेडमूकैः ॥ २१ ॥

दन्तोल्लेखनखक्षतादिदयितव्यापारपारम्परी-
निर्ग्लानापि हि कामिनी दिनमुखे निःसीममानन्दति ।
मार्जारी नखराङ्कुरात्खुदशनव्याविद्धमाना मना-
गायुर्वेदविदोऽभिगच्छति रुदत्यासन्नमृत्युर्यथा ॥ २२ ॥

तदलं तरुणेन्दुचूड नः
परितापार्तिपरीक्षयानया ।
परिवर्जय पण्डिताधमै-
रिदमैकाधिकरण्यमद्य नः ॥ २३ ॥

विज्ञापितः कवित्ररैरिति सुन्दरेशः
स्मित्वा ददौ फलकमेकमदृष्टपूर्वम् ।
यत्रासते कवय एव यथाभिलाष-
मन्ये तु नाङ्घ्रिमपि विन्यसितुं क्षमन्ते ॥ २४ ॥

अध्यारूढाः पीठमीशादवाप्तं
दुर्दर्शं तद्दुर्धियां दूरतोऽपि ।

अष्टाचत्वारिंशदाद्याः कवीन्द्रा-
श्चक्रुर्भक्तिं भूयसीं चन्द्रचूडे ॥ २५ ॥

वंशचूडामणिः पाण्ड्यो वंशशेखरतस्ततः ।
जज्ञे यत्र भुवं न्यस्य जज्ञौ स परमामृतम् ॥ २६ ॥

स तु कदाचन चम्पककोरकैः
परिचरन्प्रमथाधिपतिं मधौ ।
अजनि चम्पकपाण्ड्य इति प्रथा-
मभिवहन्कविलोकशिखामणिः ॥ २७ ॥

स कामिनीरत्नसहस्रभोग-
भाग्योन्नतश्चम्पकपाण्ड्यदेवः ।
मासे मधौ मन्मथमारराध
नवोढया नर्मपरो महिष्या ॥ २८ ॥

अपारयन्ती त्रपया गलन्तीं
नीवीं नियन्तुं समुपेक्षितुं वा ।
पत्युर्मुखं नाभिपदं च बाला
पर्यायतः केवलमालुलोके ॥ २९ ॥

आलिङ्गितुं चुम्बितुमन्ततस्तं
स्प्रष्टुं समाभाषितुमीक्षितुं वा ।
नार्यै ददौ नावसरं कदाचि-
द्व्रीडा सपत्नीव निबद्धवैरा ॥ ३० ॥

आच्छाद्य बिम्बाधरमङ्गुलीभि-
राबद्धमुग्धाञ्जलिना करेण ।
मा मेति मन्दाक्षरमर्थितं य-
दतः किमस्या मधुरोऽधरोष्ठः ॥ ३१ ॥

एकत्र विस्रम्भकथाविघातः
पक्षोऽपरः शङ्कितुमेव नार्हः ।
कृच्छ्रे तदस्मिन्नधरं कृशाङ्ग्या
गृह्णातु वा मुञ्चतु वा युवायम् ॥ ३२ ॥

दष्टाधरोष्ठा सुदृढं पुरैव
पत्युः पुनश्चुम्बनलालसस्य ।
चाटून्सहस्रं शपथाञ्छतं च
तन्वी विशश्वास न लेशतोऽपि ॥ ३३ ॥

आबद्धसम्प्राप्टनिषङ्गमन्व-
गासंजितद्वित्रकराङ्गुलित्रम् ।
आमर्दितैकद्विशरासमासी-
दन्याद्दगूष्मायितमङ्गजस्य ॥ ३४ ॥

विन्यस्य गाढं भुजयोर्भुजौ सा
मुखं मुखे वक्षसि चापि वक्षः ।
आलिङ्गति स्म स्मरबाणवर्षा-
दाच्छादयन्तीव तनुं प्रियस्य ॥ ३५ ॥

सकृन्नखाग्रोल्लिखितः कचौघः
श्लथाश्लथं संयमिता च नीवी ।
सा चाङ्गयष्टिर्मृदिता तरुण्याः
सत्यं मुनीनामपि मोहहेतुः ॥ ३६ ॥

एकाकिनीं तामपहाय लज्जा
याता पुरा यत्किल मारयुद्धे ।
ततोऽपराधादिव तामुपेतां
पुरेव तन्वी न पुरश्चकार ॥ ३७ ॥

सा गन्तुमैच्छच्छयितुं स काल्ये
साधत्त संव्यानमयं जहार ।
सा नीविमामुञ्चदयं व्यमुञ्च-
द्वावेऽपि तुल्ये बिभिदे क्रियाभिः ॥ ३८ ॥

ससर्ज तस्यां कियतो विलासां-
श्चक्रे कथं नाम निशां त्रियामाम् ।
शृङ्गारसारं कलयापि वेधाः
किं वेद वेदाक्षरजीर्णकोशः ॥ ३९ ॥

अनन्यजे वर्षति काममित्थ-
मपव्यवस्थं शरमण्डलानि ।
आदिर्निशादिः सुरतस्य यूनो-
रन्तो निशान्तोऽपि च पर्यणंसीत् ॥ ४० ॥

स जातु प्रासादे शयनमधिगच्छन्क्षितिपतिः
समाजघ्रौ गन्धं कुसुमकुलदुष्प्रापमतुलम् ।
महिष्याः पद्मिन्या मलयपवमानैरुपहृतं
प्रसूतं केशान्तात्प्रशिथिलदृढग्रन्थिशिथिलात् ॥ ४१ ॥

पद्मसौरभ्यजातीयं पद्मिनीकेशसंभवम् ।
अनाघ्रातचरं गन्धमवासासीत्स तं नृपः ॥ ४२ ॥

मनोगतं मे कवयत्यवेत्य यः
स एतदग्र्यं लभतां सुधीरिति ।
अलम्बयद्द्वारि सुवर्णमुद्रिका-
सहस्रमाबध्य स पाण्ड्यभूपतिः ॥ ४३ ॥

उच्चावचाभिरपि भङ्गिभिरुल्लिखन्तो
नाद्राक्षुरस्य हृदयं कवयो महान्तः ।
आसाद्य कश्चन वटुः पुनरादिशैवः
पद्यं प्रभोरधिसभं पठति स्म हृद्यम् ॥ ४४ ॥

तस्मै किलार्थितवते सुचिरं प्रसाद्य
दारक्रियार्थमधनाय धनं समग्रम् ।
पद्यं ददौ नृपतिभावनिबन्धहृद्य-
मार्यामयं तदखिलाशयविन्महेशः ॥ ४५ ॥

जानासि पुष्पगन्धा-
न्भ्रमर त्वं ब्रूहि तत्त्वतो मेऽद्य ।

देव्याः केशकलापे
तुल्यो गन्धेन किं गन्धः ॥ ४६ ॥

इति तावदिमामार्या-
मिन्दुकलाभरणवदननिर्गलिताम् ।
पठति द्विजे सभायां
प्रभोरभूद्विस्मयो भूयान् ॥ ४७ ॥

तदनुज्ञया स वर्णी
तत्कनकं सदसि यावदादत्ते ।
तावत्तदसहमानः
प्रत्यवतस्थे कविः कीरः ॥ ४८ ॥

अपरिष्कृते प्रसूनै-
रस्ति कचेऽपि किमसृज्झले गन्धः ।
किं चिन्तितमवनिभृता
किं दृष्टं धीमता भवता ॥ ४९ ॥

इति तस्य दुराक्षेपा-
दप्रतिभे ब्रह्मचारिणि स्तब्धे ।

प्रादुर्भूयाह हरः
कविवेषधरः पुरस्तेषाम् ॥ ५० ॥

केन कुधिया सभाया-
मन्तेवासी ममायमाक्षिप्तः ।
प्रकृतिः सा पद्मिन्याः
पङ्कजगन्धः शरीरे यः ॥ ५१ ॥

पार्थिवकुसुमविहीने
भवति शचीकुन्तले कथं गन्धः ।
कः शङ्कितोऽप्युपाधिः
क्रमते कबरीपरीमले गौर्याः ॥ ५२ ॥

कार्मणमलात्ममूर्तिषु
घटते यदि पार्थिवेषु सौरभ्यम् ।
किमिव खलु पद्मिनीना-
मपकृतमसृजां मलैः केशैः ॥ ५३ ॥

इति विजित्य तमुद्धतमुद्धतैः
कविवरे परिगर्जति भाषितैः ।

अलभत द्रविणं स वटुर्झटि-
त्यवनिपोऽप्यवरोधगृहं ययौ ॥ ५४ ॥

कविष्वेकीभूय स्वयमपि हरः संघिषु चर-
न्कथाः कुर्वन्हृद्याः स्वयमपि वसन्संघफलके ।
वृतस्तैः स्वामित्वे विविधरचनाभिर्भणितिभिः
कदाचिद्गौरीशः कलहमभजत्कीरकविना ॥ ५५ ॥

अविश्रान्ते स कीरेऽस्मिन्नाक्षेपाभासदुर्ग्रहात् ।
प्रादर्शयत्स्वमात्मानं पञ्चवक्त्रं त्रिलोचनम् ॥ ५६ ॥

भक्तोऽपि कीरः परमाद्भुतं त-
त्पश्यन्नपि प्रत्युत दुर्बभाषे ।
मौढ्यान्निरूढादपि पामराणां
मौढ्यं चिदाभासगतं गरीयः ॥ ५७ ॥

चतसृष्वपि दिक्षु पश्यता
चतुरेणापि महेश्वर त्वया ।
कविकर्मणि नैक्षि दूषणं
कथमुद्भावितमप्यहो मुहुः ॥ ५८ ॥

भावत्क्यः कृतयः श्रुतिः श्रुतिरिति प्रौढिं परां प्रापिता
अध्याहारविपर्ययप्रकरणोत्कर्षानुषङ्गादिभिः ।
तात्पर्यान्तरवर्णनेन च समर्थ्यन्ते यदस्मादृशै-
स्तज्जानन्कवितासु नः पशुपते दोषेक्षिकां मा कृथाः ॥

ईश त्वमसि ननु ध्रुवमीशानः सर्वविद्यानाम् ।
कीरकृते त्वाक्षेपे कीरवदनुभाषणं ज्यायः ॥ ६० ॥

ज्ञानाज्ञानव्यतिकरपरीणाममीशोऽस्य पश्य-
न्भक्ताज्ञानप्रशममकृतं चिन्तयित्वा स्वमागः ।
कालेनास्य स्मृतिकलुषतामुद्दिधीर्षुस्तिरोभू-
देतावन्तो यदि हि न गुणाः कः स नश्चन्द्रचूडः ॥

शिवातिवादप्रभवेन पाप्मना
स तापितो दुर्विषहेण दुर्मतिः ।
पपात गाङ्गेयपयोजिनीजले
तदेव जानन्नभिषज्यभेषजम् ॥ ६२ ॥

नित्याधमर्णस्य सकृत्प्रणत्या
नीपाटवीसंनिहितस्य धाम्नः ।

कारुण्यतः संजनितानुताप-
स्तुष्टाव कीरस्तुहिनांशुचूडम् ॥ ६३ ॥

अपि प्रणेता निगमागमाना-
माद्यः कविस्तस्य तुतोष सद्यः ।
विज्ञानखद्योतविजृम्भिताभि-
र्वाग्भिः स लुभ्यन्गुणगन्धतोऽपि ॥ ६४ ॥

उत्तार्यमाणे कनकाम्बुजिन्याः
कीरे करालम्बसमर्पणेन ।
उत्तारितं तं भवसागराद-
प्यूहांबभूवुर्मुनयः पुराणाः ॥ ६५ ॥

अज्ञानमस्य कवितापदसंप्ररूढ-
माद्यः कविः शमयितुं कलशोद्भवेन ।
उद्बोधयन्द्रमिडसूत्ररहस्यसार-
मुच्चैर्यशो जगति कीरकवेर्व्यतारीत् ॥ ६६ ॥

अधीत्य कीराद्द्रमिडागमार्थ-
मथापरे संघकविप्रवेकाः ।

वृत्तीर्विचित्राः स्वयमारचय्य
पस्पर्धिरे ते तु परस्परेण ॥ ६७ ॥

स्वस्वप्रबन्धोत्तममध्यमत्वे
संशय्य सर्वे कृतसंविदस्ते ।
सर्वज्ञमीशं शरणं प्रपन्ना-
स्तस्मिन्नतिष्ठन्त कृतप्रणामाः ॥ ६८ ॥

आविर्भूय ततो लिङ्गादाह तान्मधुरेश्वरः ।
तदीयेषु प्रबन्धेषु तारतम्यविवेचने ॥ ६९ ॥

अस्ति रुद्र इति ख्यातो वैश्यः स्कन्दांशसंभवः ।
शापान्मे मूकतां प्राप्तः स वश्छेत्स्यति संशयम् ॥

शृण्वतस्तस्य यां हर्षात्स्यन्दते बाष्पनिर्झरः ।
सकण्टकानि चाङ्गानि सा वृत्तिर्गृह्यतामिति ॥ ७१ ॥

तदनु तदुपगम्य श्रावयन्तः स्वसूक्तीः
पृथगुपचितबाष्पाः कण्टकोद्भेदरम्याः ।

कपिलभरणकीरैः कल्पिता एव वृत्तीः
　परिजगृहुरथान्यास्तत्यजुर्दूरतस्ते ॥ ७२ ॥

दिवं गते चम्पकपाण्ड्यदेवे
　ततश्चिरात्कोऽपि तदन्ववाये ।
राजा कवीनामपि पार्थिवानां
　राजा कुलेशो धरणीं बभार ॥ ७३ ॥

अथ संघिषु कस्यचित्कवे-
　रवमेने स यदा सरस्वतीम् ।
मधुराधिपतेर्मनस्यभू-
　त्प्रतिघो भक्तदयानिधेस्तदा ॥ ७४ ॥

कदम्बमूलमुत्सृज्य कविभिः सह शंकरः ।
स्थानमुत्तरहालास्यं प्राप वेगवतीतटे ॥ ७५ ॥

क्षितिपतिरथेशानं जानन्रुषा परिनिर्गतं
　कविकुलमशेषं तत्संतर्पयन्बहुभिर्धनैः ।
प्रतिनवसुधाधारासारास्पदैर्वचनैः स्तुव-
　न्नगरमनयद्भूयः श्रेयस्करं जगतां हरम् ॥ ७६ ॥

कालेऽथ केनापि तु कारणेन
देवीं क्वचिद्दाशकुलेऽवतीर्णाम् ।
पाणौ ग्रहीष्यन्प्रमथाधिनाथ-
स्तीरं ययौ दक्षिणवारिराशेः ॥ ७७ ॥

स दाशमाशंसितकन्यकावरं
समेत्य देवो मधुरेश्वरो युवा ।
सुतां ययाचे स्वयमुद्गिरन्गिरा
स्वमद्भुतं वागुरिकत्वकौशलम् ॥ ७८ ॥

अदृष्टचरमद्भुतं वपुरमुष्य पश्यन्नपि
प्रभावमवधारयन्नपि ततः स्फुटं धीवरः ।
परीक्षितुममुं पुनर्जलधिगर्भसंचारिणं
मया समुपदर्शितं मकरमाहरेत्यादिशत् ॥ ७९ ॥

आसाद्य वैसारिणतां चरन्त-
मम्भोनिधौ नन्दिनमात्मशापात् ।
संदर्शितं दाशकुलेश्वरेण
सानन्दमालोकत चन्द्रचूडः ॥ ८० ॥

महामायाजालं महदपि निजं स्वप्रपदना-
　द्विजित्य स्वच्छन्दं पयसि विहरन्तं जलनिधेः ।
ग्रहीतुं शैलाद्रिं किल करुणया वागुरिकया
　विशालं चिक्षेप त्रिपुरमथनो जालमुदधौ ॥

तद्भक्तिवागुराबद्धस्तरुणेन्दुशिखामणिः ।
आक्षिप्य करुणाजालमाचकर्ष तमर्णवात् ॥ ८२ ॥

मीनग्रहायापि कृतप्रवृत्तिं
　मृगाङ्कमौलिं वनितादरेण ।
पश्यन्ननङ्गो विजयध्वजं स्वं
　प्रायेण चक्रे तदुपक्रमं तम् ॥ ८३ ॥

आसाद्य संचरं देहमागमान्वेषणोचितम् ।
आलुलोके परं तत्त्वमागमान्विष्टमैश्वरम् ॥ ८४ ॥

पर्युपासितपादोऽयं प्रकृतिस्थेन नन्दिना ।
कैवर्तकन्यां जग्राह कैरवप्रियशेखरः ॥ ८५ ॥

समुत्सृजन्स मत्स्यतां ननन्द नन्दिकेश्वरः
स धीवरश्च भूतले सुधीवरत्वमागतः ।
विमानमागमय्य तां समागते पुरं शिवे
तदा तदाशये मुदं ददाश दाशकन्यका ॥ ८६ ॥

इति विंशः सर्गः ॥



# एकविंशः सर्गः ॥

—*—

कुलेशमाराधयतो महेशं
कुलेशपाण्ड्यादभवत्कुमारः ।
अन्वर्थयन्स्वामरिमर्दनाख्यां
बभार पित्रा विधृतां भुवं यः ॥ १ ॥

आस्थानभूषामणिरस्य राज्ञः
सर्वागमज्ञः सचिवः सुमेधाः ।
आसीद्द्विजो वातपुरीशनामा
वाचस्पतिर्वासवसंसदीव ॥ २ ॥

स संजिघृक्षुस्तुरगानुदारा-
न्सर्वैर्धनौघैरपि पाण्ड्यदेवः ।
तमादिशद्वातपुरीशमेव
चोलेषु गन्तुं तटमम्बुराशेः ॥ ३ ॥

लब्धाभ्यनुज्ञः सचिवः स गच्छ-
न्द्वित्रैर्दिनैः प्रैक्षत चोलदेशम् ।
स्रोतुं प्रसक्ते विषयान्तरेऽपि
जागर्ति यस्मिन्नुपमानभावः ॥ ४ ॥

कान्तासहस्रोपगतस्य सिन्धोः
का वा रतिः प्रावृषि सेवयेति ।
संगच्छते तेन निदाघ एव
सह्यात्मजा यत्र हि निःसपत्नम् ॥ ५ ॥

वर्षास्ववज्ञैव शरद्युपेक्षा
द्वेषो हिमे वाथ हिमात्यये वा ।
यत्राप्सु रागः सुरभौ शुचौ च
तत्रैव यस्मिन्सरितो वहन्ति ॥ ६ ॥

प्रावृड्विमर्दो दिशि पश्चिमाया-
मुत्पीडपीडा पुनरुत्तरस्याम् ।
स्वैरोपयोगो यदि सह्यजाया
यत्रैव सौभाग्यमितः किमस्य ॥ ७ ॥

प्रत्यग्रपूराभिगतेषु यस्मि-
न्प्रस्निग्धरम्भावनमेदुरेषु ।
कवेरकन्यातटकाननेषु
कामः समुन्मीलति घर्म एव ॥ ८ ॥

हव्याय यत्रापततां सुराणा-
मातिथ्यनिर्वर्तनतोऽनुवेलम् ।
गन्धर्वविद्याधरकिन्नराद्या
निर्विद्य निन्दन्ति पथि स्थितिं स्वाम् ॥ ९ ॥

अध्येतुमध्यापयितुं च तत्रा-
ण्याहर्तुमर्थानथ चोपभोक्तुम् ।
स्वर्गापवर्गौ च वशे विधातुं
जात्यैव यस्मिन्द्रमिडा निरूढाः ॥ १० ॥

स्वादीयसी यत्र कवेरजैव
ततस्तरां केरफलोदकानि ।
ततस्तमां चाथ गिरां विलासाः
प्रसन्नगम्भीरपदाः कवीनाम् ॥ ११ ॥

द्रष्टुं न रम्भापनसाम्रकेर-
  च्छायावृते यत्र हि शक्यमर्कम् ।
शक्यं तु संभावयितुं सरोज-
  सौरभ्यसंभारहरैः समीरैः ॥ १२ ॥

ये जातिभेदाः क्रमुकाम्रकेर-
  शालीक्षुरम्भाफणिवल्लरीणाम् ।
व्युत्पित्सवस्तेषु चरन्ति पान्था
  विश्रम्य विश्रम्य चिराय यस्मिन् ॥ १३ ॥

आदाय शस्त्राण्यवगाह्य सिन्धुं
  तपांसि विक्रीय च तन्त्रयन्ते ।
यत्रान्यतस्तत्र कलौ यदीया
  यजन्त्यविच्छिन्नमधीयते च ॥ १४ ॥

सान्यत्र सिन्धुर्ननु यात्र कुल्या
  तेऽन्यत्र धन्या इह ये कदर्याः ।
अभ्यस्तविद्या इव येऽत्र किंचि-
  दन्यत्र विद्यागुरवस्त एव ॥ १५ ॥

गच्छन्नहोभिः कतिभिश्चिदस्मि-
न्स पश्चिमे योजनतः पयोधेः ।
माकन्दरम्भावनसान्द्रमेकं
माहेश्वरं धाम समालुलोके ॥ १६ ॥

अध्यासितं पाशुपतैर्महद्भि-
रालक्ष्य वल्मीकपतेः पदं तत् ।
अप्राकृतीं भाग्यवशात्ततोऽय-
माध्यात्मिकीं कामपि शुद्धिमूहे ॥ १७ ॥

आस्थाय कारुण्यरसैकरूपा-
माचार्यमूर्तिं मधुरैर्वचोभिः ।
प्रबोधयन्तं शतशो महर्षी-
न्प्रत्यक्षमैक्षिष्ट स चन्द्रचूडम् ॥ १८ ॥

अङ्गैः क्षितावष्टभिरानमन्तं
तं दूरतो बाष्पतरङ्गिताक्षम् ।
दृष्ट्या दयाशीतलयानुगृह्ण-
न्देवः समीपस्थितिमादिदेश ॥ १९ ॥

उत्प्रेक्ष्य तस्योद्गुणशक्तिपातं
शुद्धाध्वलिप्सासुभगैर्वचोभिः
संभावयन्नैष्ठिकदीक्षया तं
चन्द्रार्धचूडः स्वयमन्वगृह्णात् ॥ २० ॥

आरुह्य माहेश्वरमाश्रमं सः
संछिन्नपाशः सचिवः क्षणेन ।
अश्वाय नीतैर्द्रविणैर्महेश-
माराधयन्पार्थिवमप्यरक्षत् ॥ २१ ॥

आकारितो दूतमुखेन राज्ञा
कर्णेजपालापकलङ्कितेन ।
अश्वैः सहैवागमनं स्वकीयं
शंभोर्निदेशेन स संदिदेश ॥ २२ ॥

अश्वानसंख्यानहमानयेय-
मासीद राजानमपेतशङ्कः ।
इति स्थिरं व्याहृतमिन्दुमौले-
र्विश्वस्य भूयः स पुरीमविक्षत् ॥ २३ ॥

अश्वानमूल्यानमितान्समीप-
मासादितानप्यरिमर्दनाय ।
निवेदयन्वृत्तमिदं स सर्वं
न्यवेदयन्नीपवनेश्वरेऽपि ॥ २४ ॥

पन्थानमालक्ष्य तुरंगमाणां
पाण्ड्ये परेद्युः स्वयमादिनान्तात् ।
क्रुध्यत्युदाकुर्वत राजभृत्याः
क्रूराशया मन्त्रिणि लब्धरन्ध्राः ॥ २५ ॥

कृताभ्यनुज्ञैः कुपितेन राज्ञा
क्रूरैश्चिरद्वेषिभिरस्य भृत्यैः ।
कदर्थ्यमानः करुणं स भूयो
विसृज्य धैर्यं विललाप धीरः ॥ २६ ॥

व्यासज्यसे किमधुना विधिकेशवाद्यै-
र्व्यासज्यसे किमथवा ललितैर्भवान्याः ।
क्रन्दन्ति कत्यशरणा इह मादृशोऽन्ये
कर्णातिथिर्भवतु कस्य तवार्तनादः ॥ २७ ॥

बद्धस्य दुष्परिहरैर्मलकर्ममाया-
बन्धैस्त्रिभिर्मम चिरादपि दीनबन्धो ।
बन्धं हरिष्यसि किलेति धृतक्षणस्य
बन्धं तुरीयमपि हा कथमद्य दत्से ॥ २८ ॥

कर्मेति काल इति वापदिशन्ति येऽन्ये
किं तैरिति त्रिजगतीं तृणवद्विचिन्त्य ।
त्वामेव संश्रितवतोऽपि दशा यदीयं
त्वं बुध्यसे क नु भवत्ययशो यशो वा ॥ २९ ॥

नाहं बिभेमि नृपतेर्न च तद्भटेभ्यः
कुर्वन्ति नाम किममी परतोऽपि मृत्योः ।
इत्थं कृतान्तवशगेऽपि हि मय्युपेक्षा
किं ते भवेदिति विषीदति किं तु चेतः ॥ ३० ॥

एकं विधेयमवलम्बनमित्युपेक्ष्य
नीतिं श्रितोऽस्मि चरणौ तव चन्द्रमौले ।
आतः किमित्थमियमापदि मे महत्या-
मन्योन्यदत्तभरयोरनयोरुपेक्षा ॥ ३१ ॥

किं ज्ञानयोगविभवैः शिव किं तपोभिः
किं कर्मभिश्च हृदयं तव रञ्जयेयम् ।
क्रन्दल्लुठत्कृपणदर्शनकौतुकं वा
निर्वर्त्य दास्यपदवीं तव निर्वहेयम् ॥ ३२ ॥

प्रारब्धकर्मणि चलत्यविलङ्घनीये
भक्तिः करिष्यति किमीशपदार्पितेति ।
दुर्निश्चयो हताधियामिह दुःश्रवोऽयं
निन्देव ते मनसि मे परिवर्तमानः ॥ ३३ ॥

किं मत्कृतेऽवतरितव्यमशिक्षितं ते
किं वा भुजाभुजि परैः कलहायितव्यम् ।
संकल्पमात्रमपि चेन्न चिकीर्षसि त्वं
शंभो ममैव तु जितं दुरितैर्दुरन्तैः ॥ ३४ ॥

भक्तिर्दृढा यदि ममास्ति भवेत्किमेवं
को वेद तत्त्वमिदमस्ति तु मेऽन्तरङ्गे ।
लोकास्तु भक्त इति मां जगृहुर्यथा ते
त्वां भक्तवश्यमवयन्ति तथा दयेथाः ॥ ३५ ॥

कः स्वापराधिषु पराक्रमते न लोकः
 शृङ्गेण हन्ति ननु गौरपि दण्डहस्तम् ।
भक्तापदक्षमतयैव तवेश्वरत्वं
 तं नाशय द्रढय वा समयस्तवायम् ॥ ३६ ॥

यत्प्रालपं चरणयोस्तव यत्तदित्थं
 मुग्धो विदग्ध इव मुग्धशशाङ्कमौले ।
तत्क्षम्यतां मम तु को वचनेऽधिकारः
 स्वामी परामृशतु वा स्वमुपेक्षतां वा ॥ ३७ ॥

इति निशम्य स वातपुरीशितुः
 करुणमालपितं करुणानिधिः ।
तुरगलक्षखुरक्षतरेणुभिः
 परिपतन्ददृशे विधुशेखरः ॥ ३८ ॥

शिवे तुरगसादित्वं
 श्रिते भक्तानुकम्पया ।
शिवा स्वयं तुरगतां
 शिश्राय बहुधा तदा ॥ ३९ ॥

कुमुदकज्जलकुङ्कुमदाडिमी-
कुसुमहेमकुवेलसमत्विषः ।
परुषहेषितभीषितशात्रवा
ददृशिरे दिशि दिश्यपि सैन्धवाः ॥ ४० ॥

यदि मरुद्विजितो विजितं मनो
यदि मनो विजितं विजितं जगत् ।
जितवतां मरुतं च तदर्वतां
किमभिधेयमतस्त्रिजगज्जये ॥ ४१ ॥

समुत्तुङ्गत्वङ्गत्तरतुरगरिङ्खाशतहत-
क्षमारेणुश्रेणिक्षणचुलुकितैरम्बुनिधिभिः ।
स्थलीभूतैः सद्यः सति धरणिभागे द्विगुणिते
भविष्यन्कैमुत्यादजनि विशदस्तस्य विजयः ॥

उदात्तेष्वारोहन्प्रसभमनुदात्तेष्ववतर-
ञ्छनैः क्रामन्नेव स्वरितपथमेकश्रुतिमपि ।
समुद्यन्मीमांसाद्वयमयखलीनैकविधृतः
पुरः प्रादुर्भूतः पुरमथितुराम्नायतुरगः ॥ ४३ ॥

तत्र कंचिदतिचित्रतेजसं
सादिनं प्रपदनप्रसादिनम् ।
पश्यति स्म बहुमानविस्मय-
स्मेरदृष्टिररिमर्दनो नृपः ॥ ४४ ॥

व्रीडानुतापव्यथितोऽथ पाण्ड्यः
प्रसादयन्वातपुरीशमग्रे ।
समीपमासेदुषि सादिवर्ये
प्रत्युद्ययौ तेन समं प्रहृष्टः ॥ ४५ ॥

कृतप्रणामेन कृतप्रणामः
स्तुवन्नृपेण स्तुवता स भूयः ।
कृत्वा कथाः काश्चिदथान्ततोऽश्वा-
न्विक्रीय यच्छन्निदमाचचक्षे ॥ ४६ ॥

आनीतमासीद्धनमश्वहेतो-
रनेन यत्ते सचिवेन राजन् ।
तत्सर्वमादाय तवैव भूत्यै
मयाहृताः पश्य शिवास्तुरंगाः ॥ ४७ ॥

गुल्मेषु कुञ्जेषु वनोदरेषु
केदारकेषूपवनेषु चामी ।
स्वच्छन्दचारा लघुविक्रमाश्च
तरन्ति तोयेष्वपि दुस्तरेषु ॥ ४८ ॥

न श्वोऽयमस्तीति किलाश्वशब्द-
स्तज्ज्ञैर्निरुक्तो विदितस्तवापि ।
सम्यक्परीक्ष्य त्वमिमान्गृहाण
धनं ममैतत्तुरगास्तवेमे ॥ ४९ ॥

तथेति तस्य प्रतिनन्द्य वाचं
तं भूषणैर्हेमभिरम्बरैश्च ।
संभाव्य सद्यो विसृजन्नृपाल-
स्तृप्तिं न लेभे तुरगान्स पश्यन् ॥ ५० ॥

आज्ञापिता द्रागरिमर्दनेन
पाण्ड्येन भृत्याः परितो भ्रमन्तः ।
बबन्धुरश्वानथ मन्दुरासु
सार्धं विनीतैस्तुरगैः पुराणैः ॥ ५१

परेद्युरश्वावसथे नियुक्ताः
प्रातः समैक्षन्त नृपालभृत्याः ।
समन्ततोऽश्वान्दशतः पुराणा-
ञ्छब्दायमानाञ्छतशः सृगालान् ॥ ५२ ॥

आकर्ण्य वृत्तं महदद्भुतं त-
त्पाण्ड्यः प्रजज्वाल रुषा स भूयः ।
इत्थं किलेदं कृतमिन्द्रजाल-
मनेन नूनं मयि मन्त्रिणेति ॥ ५३ ॥

दुष्टैः स्वतो राजनिदेशरूक्षैः
कदर्थितो राजभटैः स भूयः ।
आत्मानमात्मन्यनुसंदधानो
न क्लेशलेशं गणयांबभूव ॥ ५४ ॥

अत्रान्तरे भक्तमनुग्रहीतु-
मालोच्य कारुण्यनिधिर्महेशः ।
भयानकां दुर्ललितैस्तरङ्गैः
प्रावर्तयद्वेगवतीमकाण्डे ॥ ५५ ॥

सा निष्पतन्त्येव पुरं समस्तं
कल्लोलजालैः कबलीचकार ।
संरुध्य ये मन्त्रिणमभ्यहिंस-
न्संभ्रम्य दूरे परिदुद्रुवुस्ते ॥ ५६ ॥

पूरेण तस्याः पुरशासनस्य
कारुण्यपूरेण विनिर्यतेव ।
निर्मोचितो वातपुरीश्वरोऽपि
हालास्यनाथान्तिकमाससाद ॥ ५७ ॥

तां बध्यमानां शतशोऽपि मर्त्यैः
पात्रोदरे वेगवतीममान्तीम् ।
आलक्ष्य बद्धुं नृपतिः स पौरा-
नाबालवृद्धाङ्गनमादिदेश ॥ ५८ ॥

बध्नत्सु पौरेषु विभज्य सीमा-
मापूपिकी काचिदतीव जीर्णा ।
निर्बध्यमाना नृपतेर्भुजिष्यै-
र्विचिन्वती कर्मकरं चचार ॥ ५९ ॥

सा पिष्टकानेव सदा पचन्ती
निवेदयन्ती मनसा महेशे ।
तद्विक्रयेणापि च वर्तयन्ती
दयास्पदं भूतपतेर्बभूव ॥ ६० ॥

गवेषयन्ती जरती समन्ता-
द्गवेष्यमाणं निगमैः समस्तैः ।
ऐक्षिष्ट सा कर्मकरं युवान-
मंसोपरि न्यस्तखनित्रमेकम् ॥ ६१ ॥

तामाह वृद्धामभिगम्य देवः
किं कर्म कुर्यां तव शंस मातः ।
अनाश्रयः कर्मकरो जनाना-
मासे चिरादत्र हि नाथकामः ॥ ६२ ॥

आपूपिकीं किं धनमर्थयिष्ये
भक्ष्येण मे कर्मकृतो हि भाव्यम् ।
विक्रीय पूर्णान्वितरत्त्वपूपा-
न्क्षामानथामाञ्छिथिलांश्च मह्यम् ॥ ६३ ॥

कियानयं वेगवतीनिरोधः
कियानयं राजभटानुरोधः ।
प्रतीहि मातः पच पिष्टकं त्वं
विन्यस्य भारं मयि वीतशङ्का ॥ ६४ ॥

आमन्त्रणैरेव विमोहयंस्ता-
मम्बेति देवीति पितामहीति ।
विस्रंसयन्नूष्मलमूष्मलं स
जग्राह तत्सर्वमपूपजातम् ॥ ६५ ॥

जगौ जहास प्रणनर्त चित्रं
ववल्ग वल्गूनि वचांस्यभाणीत् ।
व्यासञ्जयन्कर्मकृतः समस्ता-
न्विस्रब्धमेको विजहार देवः ॥ ६६ ॥

इदं खनित्रं पिटकोऽयमेष
राशिर्मृदामद्य मयोपनीतः ।
पश्येति राज्ञो गणकान्समेता-
न्प्रतारयंस्तानहसीन्निवृत्तान् ॥ ६७ ॥

उच्छृङ्खलैरूर्मिभिरुत्पतन्तीं
भूयोऽप्यमान्तीं तटयोः स्रवन्तीम् ।
भीता भटा भूमिभुजे शशंसुः
पाण्ड्योऽपि तां प्रेक्षितुमाजगाम ॥ ६८ ॥

आलक्ष्य राजागममप्रमत्ता-
न्कर्मान्तिकान्कर्मकृतः स पश्यन् ।
खनन्निव क्ष्मां मृदमापगायां
क्षिपन्निवान्तः स्वयमप्यचारीत् ॥ ६९ ॥

ततस्ततस्तत्र तटीर्निबद्धाः
परामृशन्पाण्ड्यनृपोऽतिरुष्टः ।
अपूरितं क्वापि स वीक्ष्य निम्नं
केनेदमित्थं कृतमित्यपृच्छत् ॥ ७० ॥

आपूपिकीकर्मकरं युवान-
मालक्षयन्तो गणकास्ततस्तम् ।
हस्ते गृहीत्वा पुरतः क्षिपन्तो
विवव्रिरे तस्य विचेष्टितानि ॥ ७१ ॥

आपूपिकी काचिदतीव जीर्णा
सेयं दृढं कर्मकरं न्ययुङ्क्त ।
अयं नियुक्तोऽपि भृतोऽपि सम्य-
ङ्न स्पन्दते किंचन दुर्विनीतः ॥ ७२ ॥

ब्रूते पुरस्ताद्विनयोक्तिमेव
किंचिन्निवृत्ते गणके तु भूयः ।
विडम्बयन्भाषितचेष्टितैस्तं
पार्श्वस्थितान्हासयते विशङ्कः ॥ ७३ ॥

दत्तं कियद्दारुणया जरत्या
दत्ते तु किंचिच्छिथिलानपूपान् ।
अहो ममाभाग्यमियं किलासी-
न्नाथेति शेते मुहुरात्तशोकः ॥ ७४ ॥

किं मेऽस्ति तातो जननी किमास्ते
किमास्पदं किं धनमस्ति किंचित् ।
किं राजभृत्याः कृपणेषु कुर्यु-
र्यातेति नोऽधःकुरुते कदापि ॥ ७५ ॥

अन्यायवृत्ते नृपतावमुष्मि-
न्नाप्लाव्यते किन्नगरं न तोयैः ।
किं ताडितैः कर्मकरैरिहेति
तत्त्वं ब्रवीतीव कदापि मन्दम् ॥ ७६ ॥

आकर्णयन्वृत्तमिदं स सर्व-
मन्तर्हसन्तं च तमीक्षमाणः ।
आवर्त्य वेत्रेण तमाजघान
पाण्ड्यः क्रुधा प्रस्फुरिताधरोष्ठः ॥ ७७ ॥

अङ्गं त्रिलोकीमयमिन्दुमौले-
रभ्याहतं तेन यदा तदैव ।
वक्ता च हन्ता च निरीक्षिता च
वेत्राहतं विश्वमभूत्समस्तम् ॥ ७८ ॥

आलम्ब्य संज्ञां कथमप्यथैन-
मालोकते यावदयं नरेन्द्रः ।
तावत्तिरोऽभूत्तरुणेन्दुमौलिः
सा च स्रवन्ती विरराम सद्यः ॥ ७९ ॥

आलोक्य लीलायितमद्भुतं त-
दानन्दबाष्पस्थगितैर्वचोभिः ।
अस्ताविषुः स्वस्वधियोऽनुरूपैः
पौराः सपाण्ड्याः पतिमम्बिकायाः ॥ ८० ॥

चूडाबद्धभुजंगपुंगवशिरोविन्यस्तपृथ्वीभर-
प्रान्तप्रस्खलितैः कणैः कतिपयैरीषत्करे पूरणे ।
मिथ्यारोपितयत्नगौरवकथाविज्ञापनाचातुरी-
संमुह्यज्जरतीगृहीतशिथिलापूपाय तुभ्यं नमः ॥ ८१ ॥

योगक्षेमभरः समस्तजगतां न्यस्तस्तवाङ्घ्रिद्वये
कुक्षौ त्रीणि जगन्ति मूर्ध्नि शशभृद्गङ्गाकपालस्रजः ।
वोढव्यस्तदुपर्ययं यदि मृदां भारोऽपि गौरीपते
कस्ते मद्भरणे श्रमः क इव मे त्रासस्तदभ्यर्थने ॥

हे सन्तः शृणुताधुनैव मिलितैरस्माभिरेतच्छिवे
वाच्यं वेत्रहतिं विभज्य न वयं भोक्तुं समर्था इति ।
नो चेत्पादहतिः शिलाप्रहरणं कोदण्डदण्डाहति-
र्गण्डूषोदकसेक इत्यपि भवेत्सर्वं विभाज्यं हि नः ॥

ध्यायंध्यायमुपायकोटिभिरहं त्वत्प्राप्त्युपायं चिरं
निर्विण्णो निरचैषमेकमधुना हालास्यचूडामणे ।
दिष्ट्या वेगवतीतटे यदि पतेदेतद्वपुर्मामकं
संरोहेदपि जातु तत्तटमृदा साकं त्वदीयं शिरः ॥ ८४ ॥

धूलीधूसरितं शशाङ्कशकलं जम्बालिता जाह्नवी
भग्नं ब्रह्मकपालदाम फणिनो भूषोचिताः क्लेशिताः ।
मृद्भारोद्वहनं कुतोऽभ्युपगतं को वा गुणः पिष्टके
सा दुष्टा जरती किमौषधमदात्तत्वेति न ज्ञायते ॥८५॥

पञ्च्यां किं निहतः सुतो दिनमणेर्भग्नाश्चपेटाहतै-
र्दन्ताः किं तरणेः किमित्यपहृतं धातुः शिरः पञ्चमम् ।
कामं त्वं जगदीश्वरो भव ततः कर्मापि किं जीर्यति
प्रत्यक्षं खलु पाण्ड्यवेत्रलतिकाघातोऽयमासादितः ॥

देवा दूरतरं प्रयात मुनयो गृह्णीत मौनं क्षणं
मातुः शंसत मा चिरं गणवरा देवस्य दृष्टां दशाम् ।
पुष्पैर्नन्दनसंभवैरपि सुरैर्यन्मन्दमभ्यर्च्यते
तद्दिव्यं वपुरैश्वरं विलुलितं पाण्ड्यस्य वेत्राहतैः ॥८७॥

अम्ब स्विद्यति वक्त्रमम्ब किमपि श्रान्त्या गतिर्मन्थरा
मातः सीदति शंकरे प्रहृतवान्वेत्रेण पाण्ड्यो विभुः ।
इत्यावेदयतां मुखादनुपदं श्रुत्वा गणानां शिवा
प्रेमोदीर्णपतिव्रतप्रशमितक्रोधा कथं वर्तते ॥ ८८ ॥

त्राणे योऽधिकृतः समस्तजगतां तस्याम्बुराशौ सुखं
निद्राणस्य तथाविधेऽपि समये प्रष्टैव नालक्ष्यते ।
विष्टिं कुर्वति ताम्यति श्रमभराद्वेत्राहतिस्त्वय्यभू-
त्कस्याग्रे कथयिष्यसीममनयं स्वामिन्ननाथो ह्यसि ॥

लीलाधारितसिन्धुतीरसिकताभारान्तरालस्थितो
भूयासं मशकोऽप्यहं पशुपते तावच्च नार्हामि किम् ।
यत्कीदृग्विधमैश्वरं शिर इति प्रष्टुं प्रवृत्ते विधा-
वीदृक्तादृगिदं तदित्युपदिशंस्तस्यापि च स्यां गुरुः ॥

पाण्ड्यो दण्डयितास्तु पाण्ड्यतनया द्रष्ट्री कथं वर्तते
कामं सा जननी ममैव किमतो युक्तं तु वाच्यं मया ।
सव्ये स्थापय मूर्ध्नि मृद्भरममुं सव्यं वपुर्दर्शय
प्राप्ते वेत्रलताहते च तदनु द्रक्ष्यामि देव्याः स्थितिम् ॥

वोढुं प्रवृत्ते त्वयि वेगवत्याः
शीर्षेण शंभो सिकतावितानम् ।
भारं द्वयोः पर्यवसन्नमूहे
चित्ते यतीनां शिरसि श्रुतीनाम् ॥ ९२ ॥

अर्धं पौरुषमर्धमेव भवति स्त्रैणं च यत्तावकं
साम्राज्यं गृहकर्म वा किमपि तन्नायाति निर्व्यूढताम् ।
त्वं राज्ञी मधुरापुरस्य दयितस्तत्रैव ते ताड्यते
त्वं मातः स्वयमन्नदासि जगतां कान्तस्तु ते भिक्षते ॥

आखेटधर्ममनुपालयतानुभूतः
पार्थप्रहार इति यत्तदवैमि युक्तम् ।
आयासवृत्त्यनुगुणां भृतिमप्यविन्द-
न्नङ्गीकरोषि किमपार्थममुं प्रहारम् ॥ ९४ ॥

वेत्राहतिं विभक्तुं
विश्वात्मकता प्रदर्शिता भवता ।
करगतकबलग्रासे
पुनरभिनीतं शिवाद्वैतम् ॥ ९५ ॥

वेत्राहतिमतिघोरां
विभज्य ये भुञ्जते जना नियतम् ।
भवतापतापितेष्वपि
तेषूपेक्षैव ते कथं लीला ॥ ९६ ॥

आनम्यानम्य मौलिं त्वयि किरति मृदं स्रंसते मूर्ध्नि गङ्गा
बद्ध्वाबद्ध्वा कपर्दं स्पृशति फणधरा दारुणं निःश्वसन्ति ।
औत्सुक्यात्ताड्यमाने त्वयि जगदखिलं ताडयते वेत्रयष्टया
भक्तस्यैकस्य रक्षा भवति पशुपते सर्वलोकस्य शिक्षा ॥

अस्मत्तो बहुधा गृहीतमधुनाप्यस्मद्भवस्रोतसां
संरोधे न किमप्ययं प्रयतते देवः प्रमाणं ततः ।
इत्यग्रे विनिपत्य पाण्ड्यनृपतेर्ब्रूमो वयं चेत्ततः
कोपात्कोपमुपेयुषः क्षितिपतेः किं भावि संभाव्यताम् ॥

बोढव्यानि वहानि ते सुरनदीवेधःकपालादिका-
न्यात्मानं च निवेदयाम्यथ भवद्भक्त्यामृतेनाप्लुतम् ।
इत्यभ्यर्थयमानमीषदपि मामप्रेक्षमाणो भवा-
न्पिष्टापूपकृते मृदं वहसि चेद्देवः प्रमाणं ततः ॥ ९९ ॥

प्रहृतं प्रहृतमिति त्वं
पाण्ड्य विषीदसि किमम्बिकारमणे ।
प्रहृतं यदि साधु कृतं
पाशुपतं गणय सिद्धमस्त्रं तत् ॥ १०० ॥

पाण्ड्येन प्रहृतोऽसि वेत्रलतया पार्थेन गाण्डीवतः
पादेनापि किरातकेन वटुना केनापि च प्रस्तरैः ।
तत्तत्प्रत्युत तेषु तेषु तप इत्यग्राहि मत्पूजने
त्वागांस्येव पदे पदे गणयसे दैवं ममैवंविधम् ॥१०१॥

इत्थं स्तवोक्त्या मुखरेषु पौरे-
ष्वाश्चर्यमग्नेषु गणाः पुरारेः ।
आपूपिकीमद्भुतवेषरूपां
निन्युर्दिवं दिव्यविमानरूढाम् ॥ १०२ ॥

अथावसीदन्नरिमर्दनोऽपि
पाण्ड्यः स्वयं पाशुपतापचारात् ।
पादप्रणामैः प्रियभाषितैश्च
प्रसादयामास स मन्त्रिवर्यम् ॥ १०३ ॥

वैहायसीं गिरमथाकलयन्पुरारे-
भीतस्तदैव सचिवं प्रजिघाय पाण्ड्यः ।
वैराग्यमेव हृदि वातपुरीश्वरोऽपि
कृत्वा चिदम्बरमगाहत सर्ववेदी ॥ १०४ ॥

इति एकविंशः सर्गः ॥



# द्वाविंशः सर्गः ॥

---

अथाविरासीदरिमर्दनस्य
कुले नृपः कोऽपि गुणैरुदारः ।
अप्युन्नतं स्फारतरैर्यशोभि-
राचक्षते यं किल कुब्जपाण्ड्यम् ॥ १ ॥

स पाण्ड्यवंशप्रभवोऽपि देवः
संसर्गदोषाच्चिरमार्हतानाम् ।
अवाप दीक्षामपि तन्मतेन
दुरुत्तरो दुर्जनसंप्रयोगः ॥ २ ॥

आशङ्कनीयोऽपि न वेदवेद्यो-
राब्रह्मणो यत्र किलान्तरायः ।
तस्मिन्विशुद्धे शिवदासवंशे
संबन्ध इत्याविरभूत्कुमारः ॥ ३ ॥

तं मातृहीनं शिशुमुल्ललन्तं
स्तन्येन गौरी बिभरांबभूव ।
यं ज्ञानपूर्णापरनामधेयं
तदादि लोकाः समुदाहरन्ति ॥ ४ ॥

स्कन्दांशजः स द्विजसार्वभौम-
स्तारुण्य एवाखिलतन्त्रवेदी ।
त्र्य्यन्तसिद्धान्तदृशा पुरारे-
रुत्कर्षमुच्चैर्विशदीचकार ॥ ५ ॥

तं भस्मरुद्राक्षषडक्षराणां
तत्त्वावबोधैकनिधिं महान्तम् ।
आराध्य केचित्कलिमभ्यजैषुः
पचेलिमप्राक्तनपुण्ययोगाः ॥ ६ ॥

तथागताचार्यकदुर्विपाक-
तमोवृते राजकुले तदानीम् ।
मन्त्री च राज्ञो महिषी च तस्य
भक्तिं परामूहतुरिन्दुचूडे ॥ ७ ॥

संबन्धनाथाङ्घ्रिसरोजयोस्ता-
वाबध्य भक्तिं महतीमनन्याम् ।
प्रायस्यतां त्रातुममुं प्रदर्श्य
मग्नं नृपं बाह्यमतान्धकूपे ॥ ८ ॥

कदाचिदासीदथ कुब्जपाण्ड्य-
स्तापज्वरेण ज्वलताभिभूतः ।
यत्रार्हतानां नृपदेशिकानां
यत्नः समस्तो विफलीबभूव ॥ ९ ॥

देवी तदा देशिकसार्वभौम-
मारोग्यहेतोरवनीश्वरस्य ।
सर्वज्ञमभ्यर्थनया महत्या
संबन्धनाथं स्वयमानिनाय ॥ १० ॥

स ज्ञानपूर्णः प्रविशन्दृशा तं
संभावयामास रुजाभितप्तम् ।
कोटीरकोटीन्दुगलत्सुधार्द्र-
मन्तःस्मरन्देवमहंग्रहेण ॥ ११ ॥

अत्याश्रमस्थो मुनिरस्य राज्ञो
भाग्येन फाले भसितं निधाय ।
पस्पर्श हस्तेन च तं महेश-
पादारविन्दार्चनभावितेन ॥ १२ ॥

स स्पृष्टमात्रो भगवत्तरेण
शिवाभिमर्शेन गुरोः करेण ।
तत्याज विश्वत्रयभेषजेन
तापज्वरार्तिं सहसा नरेन्द्रः ॥ १३ ॥

औदर्यवह्निज्वलनोत्थितां ता-
मार्तिं निवृत्तां मुमुदे स पश्यन् ।
देवी तु शान्तं विदती जहर्ष
भवज्वरज्वालमहाभिषज्ञम् ॥ १४ ॥

तापज्वरो भूमिभृतः शरीरा-
त्तस्यापनीतः करुणार्द्रशायम् ।
तथागतानां द्विगुणस्तदादि
चिन्तासना चेतसि संजजृम्भे ॥ १५ ॥

अष्टौ सहस्राणि तथागताना-
मष्टासु शैलेषु कृतास्पदानाम् ।
जातेऽभिषङ्गे मधुरामवापु-
र्जल्पेन जेतुं शिवदेशिकं तम् ॥ १६ ॥

पारीणमेनं पदवाक्यमाने
त्र्यन्तसिद्धान्तगुरुं महान्तम् ।
आसाद्य जल्पाय सकृत्प्रवृत्ता
आसन्क्षणादप्रतिभा जिनेन्द्राः ॥ १७ ॥

उत्सृज्य सर्वाण्युपबृंहणानि
मीमांसितन्यायदृढीकृतानि ।
उल्लङ्घ्य तर्कानपि पामरास्ते
संभूय तं प्रत्ययतोऽजिगीषन् ॥ १८ ॥

संसारतापानखिलान्निहन्तुं
शक्नोत्यहिंसैव हि शाक्यदृष्टा ।
नार्च्यो महेशो न शिवा विभूति-
रित्यार्हताः स्वामलिखन्प्रतिज्ञाम् ॥ १९ ॥

वेदाः प्रमाणं सह कामिकाद्यै-
विश्वाधिकः शंकर एक एव ।
भस्मैव धार्यं भुवि मोक्षमाणै-
रित्यालिखत्स्वां स गुरुः प्रतिज्ञाम् ॥ २० ॥

जैना अथोचुर्ज्वलने क्षिपामो
द्वये वयं स्वस्वकृतान्तलेखम् ।
दाहाददाहादपि सर्वलोकाः
पश्यन्तु नो भङ्गजयाविहेति ॥ २१ ॥

तथेति संबन्धकरार्पितेन
लेखेन जग्लेऽपि न हव्यवाहे ।
अदह्यत द्राक्पुनरार्हतानां
लेखः सहायुर्लिपिभिस्तु तेषाम् ॥ २२ ॥

पराजये शूलशिखाधिरोहं
पणं वृणानाः स्वयमेव जैनाः ।
विचिक्षिपुः स्रोतसि वेगवत्याः
पत्रं प्रवाहाभिमुखं चलेति ॥ २३ ॥

तत्स्रोतसा तत्क्षणमेव सिन्धो-
रनीयत प्राग्दिशमासमुद्रात् ।
प्रत्यग्दृशा तद्गुरुणार्पितं तु
प्रत्यङ्मुखं स्रोतसि संचचाल ॥ २४ ॥

ततः क्षणाद्देशिकसार्वभौम-
विज्ञानसिन्धोरिव वीचिघोषः ।
समन्ततः शंकरकिङ्कराणां
समुज्जजृम्भे विजयाट्टहासः ॥ २५ ॥

चार्वाकशिष्या विजितास्ततस्ते
सौत्रान्तिका माध्यमिकाश्च जैनाः ।
अवीक्षितान्योन्यमुखाः प्रचेलु-
रारोढुकामाः स्वयमेव शूलम् ॥ २६ ॥

ते बोध्यमाना अपि शैवधर्मं
शूलाधिरोहाय रुचिं बबन्धुः ।
प्राणान्तिकां निष्कृतिमेव युक्तां
पश्यन्स चैतेषु तथानुमेने ॥ २७ ॥

पाण्ड्यस्ततः प्रत्ययदर्शनेन
संबन्धनाथं शरणं प्रपन्नः ।
अशेषपापच्छिदुरामयाच-
दीक्षां शिवज्ञानविधानदक्षाम् ॥ २८ ॥

आचार्यवर्योऽप्यधिवासितं प्रा-
क्छिष्यं शुभस्वप्ननिरस्तशोकम् ।
आराधितस्य ज्वलने पुरारे-
रनुज्ञया संनिधिमानिनाय ॥ २९ ॥

षडध्वनः पञ्च कलाश्च तस्य
संशोधयन्देशिकसार्वभौमः ।
दुर्दीक्षया दूषितमप्ययत्ना-
त्संभावयामास शरीरकोशम् ॥ ३० ॥

शरीरमाविश्य स तस्य नाडी-
संधानमार्गेण गुरुः पुनानः ।
जातिं समुद्धृत्य दयासमुद्र-
श्चक्रे शिवज्ञाननिधानमेनम् ॥ ३१ ॥

वित्तं शरीरं हृदयं च तस्य
विन्यस्य पाण्ड्यश्चरणारविन्दे ।
अभ्यर्थयन्नर्धशशाङ्कचूडं
शैवाध्वपान्थः प्रशशास पृथ्वीम् ॥ ३२ ॥

शिवव्रतस्थाः शिवमन्त्रसक्ताः
शिवागमज्ञानसुधारसज्ञाः ।
प्रजा बभूवुः सकलास्तदानीं
प्रजेश्वरे शैवपदाधिरूढे ॥ ३३ ॥

अध्यात्मविद्याभिरयं प्रबुद्धा-
न्मन्दान्विचित्राभिरुपासनाभिः ।
बाह्यार्चनैरेव परांश्च शंभो-
र्धीरोऽनुजग्राह यथाधिकारम् ॥ ३४ ॥

अधीष्व वेदानवधारयार्था-
नधीहि शंभुं वह भूतिमङ्गे ।
तपांसि तप्यस्व सुरान्यजेति
सर्वे जनाः शंकरमारराधुः ॥ ३५ ॥

काले ततो वैश्यकुले बभूव
कश्चिन्महार्थो मधुरानगर्याम् ।
करग्रहं मातुलकन्यकायाः
कर्तुं प्रतस्थे स कदापि चोलान् ॥ ३६ ॥

अतीतयोर्मातुलयोस्ततस्ता-
मादातुकामः स्वजनानुमत्या ।
वैश्यस्तया साकमनूढयैव
भूयः स्वमावासमभिप्रतस्थे ॥ ३७ ॥

मध्येपथं क्वापि महेशधाम्नि
शैवानि तीर्थान्यटता स दिष्ट्या ।
संबन्धनाथेन समाजगाम
संजीवितश्चात्र स सर्पदष्टः ॥ ३८ ॥

संबन्धनाथेन तदा नियुक्तः
स बालिकोद्वाहकृते कुमारः ।
पाणिग्रहं साक्षिषु बान्धवेषु
चिकीर्षमाणः समशेत किंचित् ॥ ३९ ॥

शंभुः शमी कूप इति त्रयं त-
  त्तत्र स्थितं साक्षिपदे वृणानः ।
अग्राहयत्पाणिमनेन सद्यः
  स देशिको मातुलकन्यकायाः ॥ ४० ॥

स तां समादाय वधूं नवोढां
  संप्राप्य भूयो मधुरां विशालाम् ।
आराधयन्नार्तशरण्यमीशं
  हालास्यनाथं मुमुदे चिरेण ॥ ४१ ॥

कालेन तस्यास्तनया बभूवुः
  कारुण्ययोगेन शशाङ्कमौलेः ।
स्तनंधयांस्तानपथे द्विषत्या
  स जातु लेभे कलहं सपत्न्या ॥ ४२ ॥

वेश्येव काचित्त्वमसीह गेहे
  करग्रहे कस्तव दासि साक्षी ।
इति प्रवृत्तं कलहेऽतिवाद-
  मेषा सपत्न्या ममृषे न साध्वी ॥ ४३ ॥

सा बाष्पमत्यूष्मलमुद्वहन्ती
सद्यो विनिर्गत्य गृहाद्विषण्णा ।
आपन्नबन्धोश्चरणं पुरारे-
र्हालास्यनेतुः शरणं प्रपेदे ॥ ४४ ॥

साक्षी भवानेव करग्रहे मे
शंभो शमीकूपसमीपवर्ती ।
साक्ष्यं न धत्से यदि मे सपत्न्याः
सद्यो विहास्यामि तनूमिहेति ॥ ४५ ॥

हालास्यनाथान्तिकमभ्युपेत्य
संपश्य पाणिग्रहसाक्षिणो मे ।
इति त्वमाकर्ष बलात्सपत्नी-
मित्याह तां व्योमगिरा महेशः ॥ ४६ ॥

सा प्रेयसा बन्धुजनैश्च साकं
तामानयन्ती प्रसभं सपत्नीम् ।
यावच्छिवस्यान्तिकमेति ताव-
त्तत्र स्वयं तत्त्रयमाविरासीत् ॥ ४७ ॥

इमे समेताः सदनं पुरारे-
रीशानकोणेऽस्य कदाप्यदृष्टम् ।
अन्धुं शमीवृक्षमनाथबन्धुं
लिङ्गं च दृष्ट्वा विभयांबभूवुः ॥ ४८ ॥

भोगाङ्गपूजावसरे पुरारेः
समागतास्तत्र सुराः समस्ताः ।
आलोक्य लीलायितमद्भुतं त-
द्भक्त्या नतास्तुष्टुवुरिन्दुचूडम् ॥ ४९ ॥

क्व ते दया वाङ्मनसातिभूमिः
क्व दुर्लभो वा त्वदवाप्त्युपायः ।
अहो जितं सुन्दरनाथ मर्त्यै-
रहो जितं तत्र च दीनदीनैः ॥ ५० ॥

गुप्तं वृथा कोटिभिरागमानां
गुप्तं वृथाहो गुरुभिः पुराणैः ।
कोणे यदत्र त्वमिहानुकम्पा-
कोशालयद्वारमपावृणोषि ॥ ५१ ॥

अस्माभिरज्ञानपि तारयद्भिः
किया‍न्प्रकर्षो विबुधेषु कार्यः ।
इति त्वया चिन्तयता किमीश-
प्रतारिताः स्मस्त्रिदिवार्पणेन ॥ ५२ ॥

पाण्ड्यप्रियं त्वां विदती शिवापि
पाण्ड्यात्मजासीद्यदि का कथा नः ।
पाण्ड्येषु जायेमहि खञ्जरीटाः
कोयष्टयः कोलकिशोरका वा ॥ ५३ ॥

लीलासु ते लब्धसरूपभावा
ग्राम्या इमे पाण्डुषु चन्द्रमौले ।
जिघ्रन्ति केचिद्विलिहन्ति केचि-
च्चर्वन्ति केचिच्च वतंसमिन्दुम् ॥ ५४ ॥

त्वं तावदत्यन्तमृदुः प्रजासु
त्वत्तोऽपि मृद्वी गृहिणी तवेयम् ।
अद्यायतौ वा चरतोः किलैव-
मात्मैकशेषो भविता ध्रुवं वाम् ॥ ५५ ॥

कैवल्यदानाय कृतप्रतिज्ञौ
काशीपतिः पाण्ड्यपतिर्युवां द्वौ ।
शिष्यैकविश्रान्तममुष्य दानं
सार्वत्रिकं तावकमेव शंभो ॥ ५६ ॥

विश्वस्य दीर्घा श्रवणादिभङ्गीं
वीतोद्यमाः स्मश्चिरमीश मोक्षे ।
संप्रत्यवाबुद्ध्यत वाक्यशेष-
पञ्चाक्षरीयं मधुरां विनेति ॥ ५७ ॥

ये ये जना यद्यदिहार्थयन्ते
तत्तन्निरस्तोपधि तेषु तेषु ।
ओमित्यलोभादनुजानतः कि-
मोमित्यभिख्यैव तवेयमासीत् ॥ ५८ ॥

अन्वेषणीयं किमनाहते ते
तत्त्वं हताः स्मो वयमागमौघैः ।
विस्पष्टमत्राहत एव तत्त्वं
वेत्रेण पाण्ड्यस्य यदीक्षितं तत् ॥ ५९ ॥

स्वरूपमेतत्तव सुन्दरेश
 शुद्धा दयेत्येव तु लक्षयामः ।
कदम्बमूलं तु तटस्थलक्ष्म
 कारुण्यसिन्धो तव तर्कयामः ॥ ६० ॥

यद्धामसीमाक्रममात्र एव
 वृत्रद्रुहस्तत्कलुषं विलिल्ये ।
सकृद्विगाह्यैव यदीयतीर्थे
 शापं मुनेरिन्द्रगजो मुमोच ॥ ६१ ॥

नीपाटवीं यः कुलशेखरेण
 निर्मापयामास च राजधानीम् ।
प्राप्ता शिवा पाण्ड्यकुलेऽवतार-
 मनुज्ञया यस्य तटातकेति ॥ ६२ ॥

उपायत स्वं युधि जेतुकामा-
 मुपायतस्तामपि लीलया यः ।
पतञ्जलेर्भक्तिमवेत्य नृत्तं
 प्रादर्शयद्रूप्यसभान्तरे यः ॥ ६३ ॥

कुण्डोदरस्योदरपूरणेऽपि
कुण्ठोद्यमा येन कृतान्नपूर्णा ।
नालं पिपासोपशमाय यस्य
नदी च सा वेगवती यतोऽभूत् ॥ ६४ ॥

समाहृताः काञ्चनमालिकायाः
स्नानाय येनाम्बुधयः समस्ताः ।
महीपतिं यो मलयध्वजं च
दिवं गतं दर्शयति स्म पत्नीम् ॥ ६५ ॥

मीनेक्षणायां सुतमुग्रपाण्ड्य-
मवाप यः सुन्दरपाण्ड्यदेवः ।
तस्मै च यः शक्तिधराय वज्रं
चण्डायुधं चक्रमपि व्यतारीत् ॥ ६६ ॥

उद्वेलमप्यर्णवमुग्रपाण्ड्यो
यद्दत्तया शोषयति स्म शक्त्या ।
वज्रेण मौलिं बिभिदे मघोन-
श्चण्डायुधेनापि जघान मेरुम् ॥ ६७ ॥

आचष्ट यश्चाशयमागमानां
जिज्ञासमानेषु तपोधनेषु ।
यद्दत्तरत्नाहितमौलिनैव
पाण्ड्यार्भको राजपदेऽभिषिक्तः ॥ ६८ ॥

कपर्दजैर्यस्य घनाघनौघैः
पपे पयोधिः परिजृम्भमाणः ।
प्राप्तैश्च तैर्यः पटमण्डपत्व-
मवारयद्वृष्टिमतिप्रवृद्धाम् ॥ ६९ ॥

सिद्धात्मना यो विततार सर्वाः
सिद्धीः प्रजानां मधुरानगर्याम् ।
यः सुन्दरेशानविमानसक्तं
शिलागजं चाशयदिक्षुकाण्डान् ॥ ७० ॥

अस्त्रेण तुर्यावतरेण शौरे-
र्हस्ती हतो येन तथागतानाम् ।
श्वश्रूदुरालापविवासिताया
यः प्रादुरासीद्द्विजकन्यकायाः ॥ ७१ ॥

व्यत्यस्य नृत्तं विदधे दयालुः
पाण्ड्यस्य यः प्रार्थनया महत्या ।
पान्थद्विजस्त्रीवधपापवादं
व्याजेन यो व्याधवटोरहार्षीत् ॥ ७२ ॥

स्वमातृजारं पितृघातिनं च
विप्राधमं यो विमलीचकार ।
अङ्कस्य भार्याहरमस्त्रशिष्य-
मङ्कास्त्रनैवाजयदाहवे यः ॥ ७३ ॥

मायोरगं यः शमयांबभूव
मायागवीं यस्य पुनर्महोक्षः ।
यः पाण्ड्यसेनान्यमनुग्रहीतुं
संदर्शयामास चमूं नृपालम् ॥ ७४ ॥

पाण्ड्याय यः प्रादित हेम यश्च
वैश्याङ्गनाभ्यो वलयान्दयार्द्रः ।
अष्टापि सिद्धीः प्रतिपादयन्यो
यक्षाङ्गनासु प्रससाद भूयः ॥ ७५ ॥

द्वारं समुद्धाट्य निशि स्वयं य-
श्चोलाय सेवामदिशन्निगूढम् ।
पानीयदानेन च पाण्ड्यसेना-
मुज्जीव्य चोलेन्द्रमजापयद्यः ॥ ७६ ॥

स्वर्णं दिशन्सिद्धरसं प्रयुज्य
पुपोष वेश्यां शिवधर्मिणीं यः ।
पाण्ड्यस्य यः स्वैकपरायणस्य
सादीभवन्साधयति स्म चोलम् ॥ ७७ ॥

अक्षय्यमप्यक्षतमर्पयन्यो
भक्ताय भक्तार्पणमन्वगृह्णात् ।
येनाहृतो मातुलरूपभाजा
वैश्यो वटुर्ज्ञातिजनान्विजिग्ये ॥ ७८ ॥

आस्थाय यश्चार्जुननाथलिङ्गं
पाण्ड्ये महत्पातकमुन्ममार्ज ।
काष्ठानि मूर्ध्ना कलयन्न्यधत्त
काष्ठां परां गायति यः स्वभक्ते ॥ ७९ ॥

भद्राय भूरि द्रविणं दिशेति
पत्रं ददौ चेरमहीभुजे यः ।
भद्राय दिव्यं फलकं दिदेश
वृष्टौ महत्यामपि गायते यः ॥ ८० ॥

द्वीपान्तरीयामवमापि गीत्या
भद्रा विजिग्ये यदनुग्रहेण ।
वाराहमास्थाय वपुर्ददौ यः
स्तन्यामृतं कोलकिशोरकाणाम् ॥ ८१ ॥

प्रापय्य मानुष्यकमद्भुतं यः
पाण्ड्यस्य तान्मन्त्रिपदेऽभ्यषिञ्चत् ।
यः खञ्जरीटं शरणं प्रपन्नं
चक्रे बलिभ्यो बलिनं खगेभ्यः ॥ ८२ ॥

जहार कोयष्टिमनुग्रहीतुं
यादांसि यः काञ्चनपङ्कजिन्याः ।
कल्पान्तलुप्तां कटकाहिना यः
सीमां विवव्रे मधुरानगर्याः ॥ ८३ ॥

प्राद्रावयत्पाण्ड्यकृतेऽरिसेनां
बाणैः स्वनामाक्षरलाञ्छितैर्यः ।
दुरासदं दुष्कविभिः स्वयं यः
प्रादाद्विचित्रं फलकं कवीनाम् ॥ ८४ ॥

पाण्ड्यस्य चिन्तानुगुणं निबध्य
पद्यं ददौ यश्च निजार्चकाय ।
विद्याविवादे विहितातिवादं
कीरं कविं यः पुनरन्वगृह्णात् ॥ ८५ ॥

अपि स्वयं कुम्भभवेन यस्त-
मबोधयद्द्रामिडसूत्रतत्त्वम् ।
व्यवेचयन्मूकमुखेन यश्च
तत्तत्कृता द्रामिडसूत्रवृत्तीः ॥ ८६ ॥

भक्ते कवौ क्वापि विमाननेन
पाण्ड्याय कुप्यन्नगराद्ययौ यः ।
दाशो भवन्दाशकुलेऽवतीर्णां
जग्राह पाणौ जगदम्बिकां यः ॥ ८७ ॥

आचार्यमूर्तिं परिगृह्य नम्र-
मदीक्षयद्वातपुरीश्वरं यः ।
अदर्शयद्यस्तुरगान्सृगाला-
नभ्यर्थितो वातपुरीश्वरेण ॥ ८८ ॥

प्रावर्तयद्वेगवतीमथैनं
पाण्ड्येन यः पालयितुं निरुद्धम् ।
विश्वात्मतां यो विशदीचकार
वेत्राहतिं स्वां भुवने विवृण्वन् ॥ ८९ ॥

संबन्धनाथस्य मुखादकार्षी-
च्छान्तं ज्वरं पाण्ड्यमहीपतेर्यः ।
विद्याविवादे विजिताननेन
यः शूलमारोपयति स्म बौद्धान् ॥ ९० ॥

आनीय यः कूपशमीमहेशा-
न्वैश्याविवाहे विववार साक्ष्यम् ।
लीलास्वनन्तास्वपि यस्य दृष्टा
लीलाचतुःषष्टिरियं पुराणे ॥ ९१ ॥

आलम्बमेकं जगतां त्रयाणा-
मव्याजकारुण्यसुधानिधानम् ।
तं तादृशं त्वामपहाय शंभो
किं तावदन्यैरिह किंपचानैः ॥ ९२ ॥

इति स्तवोक्त्या मुदितः सुराणा-
मीशः स वैश्यां सह वल्लभेन ।
निर्विष्टभोगामवनौ चिराय
निन्ये परं धाम दयार्द्रचेताः ॥ ९३ ॥

इत्थं समस्तार्तिहरः प्रजाना-
मीशः कदम्बद्रुममूलधामा ।
आस्ते त्रिलोकीमनुकम्पमानः
साचिव्यतो मीनविलोचनायाः ॥ ९४ ॥

श्रोतव्यं निधिरस्ति कोऽपि निहितो हालास्य इत्यग्रतो
मन्तव्यं स निधिर्जगन्निधिरिति न्यायैरथोच्चावचैः ।
ध्यातव्यं हृदि मूललिङ्गमथ च श्रीसुन्दरेशाभिधं
द्रष्टव्यं शफरेक्षणासहचरं तत्त्वं ततः शांकरम् ॥ ९५ ॥

लीलां चतुःषष्टिमिमां प्रणीतां
हालास्यनेतुस्तरुणेन्दुमौलेः ।
श्रीनीलकण्ठे मयि कर्णजाह-
मानीय मीनाक्षि चिरं दयेथाः ॥ ९६ ॥

कृतिः समर्प्या विरसा मयेति
कस्यैष दोषः स परं भवान्याः ।
रम्यां कृतिं सा यदि रोचयेत
तथानुगृह्णातु निवारितं कैः ॥ ९७ ॥

माभूवन्नव च रसाः कविप्रतीताः
काव्येऽस्मिन्पदकमलार्पिते पुरारेः ।
आस्ते तु ध्रुवमखिलाभिनन्दनीया
कारुण्यामृतरसकन्दली जनन्याः ॥ ९८ ॥

हालास्येशितुरीशितुर्यदि सखे लीलासु शुश्रूषसे
तत्सर्वागमगुप्तमस्य यदि वा तत्त्वं विजिज्ञाससे ।
पारं वाथ दिदृक्षसे यदि परं काव्यागमस्रोतसां
तत्कर्णे कुरु नीलकण्ठमखिनो वाचं शिवैकाश्रयाम् ॥

मलयध्वजपाण्ड्यकन्यका-
चरणद्वन्द्वनिवेशितात्मना ।
शिवयोः कविनेदमर्पितं
शिवलीलार्णवकाव्यमद्भुतम् ॥ १०० ॥

इति द्वाविंशः सर्गः ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापना-
चार्यचतुरधिकशतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजि-
श्रीमदप्पय्यदीक्षितसोदर्यश्रीमदाच्चान्दीक्षित-
पौत्रेण नारायणदीक्षितात्मजेन
भूमिदेवीगर्भसंभवेन महाकवि-
श्रीनीलकण्ठदीक्षितेन विरचितं
शिवलीलार्णवमहाकाव्यं
संपूर्णम् ॥



